# अब सिलाई-के-लिये तैयार जीन्स के सबसे बड़े निर्माता की एक छोटी-सी पेशकश.

पेश हैं रफ़ एण्ड टफ़ जूनियर जीन्स ! रफ़ एण्ड टफ़ किट में आपको मिलेगा पूरा .85 मीटर बेहतरीन डेनिम कपड़ा (132 सें.मी. तक के कद के लिये), तगड़ी ज़िप, शानदार लेबल, रिवेट्स, बटन और पैचेस. यानी अब जूनियर भी बन सकते हैं रफ़ एण्ड टफ़.

Trikaya Grey AML 5.96 HIN




A QUALITY PRODUCT FROM ARVIND MILLS

JUNIOR

सिलाई-के-लिये-तैयार जीन्स

# A POLIO-FREE INDIA!

PULSE POLIO IMMUNIZATION
DEC 7 – JAN 18

The goal gets nearer!
Take the next step on
**National Immunisation Days:**

## December 7, 1996
## January 18, 1997

CALLING PARENTS!

Even if

* the child is indisposed or has diarrhoea
* the child had been given polio drops earlier

TO ENSURE CENT PER CENT PROTECTION



**Remember to**

Take your children (under 5) to the nearest immunisation booth / centre to receive
**TWO ADDITIONAL DROPS**
**OF THE ORAL POLIO VACCINE**
**on National Immunisation Days**



The future of the country depends on the future of our healthy children



**POLIOPLUS**

**LET US STRIVE TOWARDS CREATING A POLIO-FREE INDIA BY 2000 A.D.**



# अपने चहेते क्रिकेट हीरो से मिलें,
# आज ही !



World Cup-96 Achievers Collection

# FREE

**Cricketer Card With Every Pack**



सिर्फ़ Rs.13.50




- स्वादिष्ट
- किफ़ायती
- बनाने में आसान

जल्दी करो बच्चो,
ऑफर केवल
28 फरवरी '97 तक



हलो क्रिकेट फ़ॅन्स.
अब आपको रसना स्प्रेड मेकर स्वादिष्ट ही नहीं, रोमांचक भी लगेगा.
क्योंकि जब जब आपकी मम्मी इसमें से 500 ग्राम मज़ेदार रसना स्प्रेड बनाएंगी, तब तब आपको **एक एक दिलचस्प क्रिकेटर कार्ड** मिलेगा. जी हाँ, रसना स्प्रेड मेकर के हरेक पॅक के साथ एक क्रिकेटर कार्ड बिल्कुल मुफ़्त! ख़ास आपके लिए. हुई न दोहरे फायदे की बात. जी चाहा तब खाया. दिल किया तब खेल लिया.
यही नहीं, अपनी सैन्डविच, चपाटी, या पूरी का स्वाद भी उभार लिया.
रसना स्प्रेड मेकर के साथ.

**पॅक्स इस ऑफ़र के बग़ैर भी उपलब्ध हैं.**

Mudra:EAMR:9610 Hin.





# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**


## बालाधिकारस्य संरक्षणम्

पुनरपि एकवारं बालदिनम् आगतं गतं च । यथापूर्वं तस्मिन् दिने बालानां शोभायात्रा प्रवृत्ता । बालानां निमित्तं विविधाः स्पर्धाः अपि प्रवृत्ताः । क्वचित् तेषां निमित्तं प्रवासः, अन्ये मनोविनोदकार्यक्रमाः चापि आयोजिताः आसन् । एतस्य सर्वस्य परिशीलनात् कश्चन प्रश्नः उदेति यत् एतादृश्यः क्रियाः किम् एकदिनमात्रसीमिताः भवेयुः इति । एकं दिनं बालदिनत्वेन आचरितं चेत् किम् अस्माकं कर्तव्यं पालितं भवेत् ?

एकं दिनं यावत् बालदिनाचरणस्य किम् एतत् तात्पर्यं भवति यत् ते अन्येषु दिनेषु उपेक्षाम् अर्हन्ति इति ? षड्भ्यः सप्तभ्यः वा वर्षेभ्यः पूर्वं कुत्रचित् कश्चित् चिन्तितवान् यत् प्रौढानाम् इव बालानाम् अपि सन्ति एव केचन अधिकाराः इति । ततः संयुक्तराष्ट्राणां विशेषसमावेशः सम्पन्नः । तत्र निर्णीतं यत् सर्वे सदस्यदेशाः बालाधिकारनियमम् अङ्गीकुर्युः, समावेशस्य निर्णयान् क्रियान्वितान् कुर्युः च इति ।

गते मासे प्रवृत्ते संयुक्तराष्ट्रसङ्घस्य समावेशे भारतस्य प्रतिनिधिना यत् अभियाचितं तत् युक्तम् एव अस्ति । तेन उक्तं यत् १९८९तमे वर्षे प्रवृत्तस्य समावेशस्य निर्णयाः केन केन देशेन कियता प्रमाणेन व्यवहारे आनीताः इत्येतस्य परिशीलनार्थं कश्चन विशेषसमावेशः आयोजनीयः इति । तेन एतदपि प्रतिपादितं यत् एतादृशाः परिशीलनोद्देशकाः समावेशाः प्रतिपञ्चवर्षं प्रवर्तेरन् इति ।

एतद्विषये भारतेन किं वा अनुष्ठितम् ? प्रमुखं नियमद्वयं तु अङ्गीकृतं यत् बालनां शिक्षणाधिकारः अस्ति इति, अपरिहार्यकर्मकरत्वात् मुक्तिं प्राप्तुम् अधिकारः अपि अस्ति इति च । अनधिकृतात् कस्माच्चित् सर्वेक्षणात् ज्ञायते यत् भारते शतकोट्यधिकबालाः विद्यालयशिक्षणात् वञ्चिताः सन्ति इति । ते अलसाः सन्तः, बालकर्मकराः सन्तः, निन्द्यप्रवृत्तिमन्तः सन्तः, निन्दापात्राणि सन्तः वा दिनानि यापयन्ति इति श्रूयते ।

भारतेन १९८६तमे वर्षे कश्चन विधिः कृतः यत् बालाः कर्मकरत्वेन न नियोजनीयाः, कठिनतमकार्ये तु ते सर्वथा न नियोजनीयाः इति । तस्य विधेः कारणतः बालकर्मकरसङ्ख्यायां किञ्चिदिव न्यूनता जाता । किन्तु नियमस्य परिपालनं कियता प्रमाणेन क्रियते इत्येतस्य परीक्षणार्थं कोऽपि क्रमः नास्तीत्यतः एतत्क्षेत्रे साफल्यं न्यूनम् एव दृश्यते ।

यदि अस्मद्देशे एव नियमस्य क्रियान्वयनविषये सुदक्षः मार्गः नास्ति तर्हि विश्वस्तरीयं सङ्कटनं कथं वा योग्यं पदं निधातुं शक्नुयात् ?


सम्पुटः - १३ डिसेम्बर् - १९९६ सञ्चिका - ९

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००




# कठिनशब्दानां

# सान्दर्भिका: अर्था:

| | | | | | |
|---|---|---|---|---|---|
| अङ्कः | - | Lap | त्वक् | - | Bark |
| अयस्किट्टः | - | Rust | धनग्रन्थिः | - | A bag of money |
| अवगुण्ठनम् | - | Veil | नियुक्तिः | - | Appointment |
| अवधानम् | - | Attention | नीडम् | - | Nest |
| अविहाय | - | Having included | पङ्कः | - | Mud |
| उत्प्लुत्य | - | Having jumped | परशुः | - | Axe |
| उत्सः | - | Fountain | पाशविकः | - | Inhuman |
| उदयमानः | - | Rising | प्रतिफलम् | - | Return |
| ऋणम् | - | Debt | मरीचम् | - | Pepper |
| ऋतुपवनः | - | Monsoon | मर्यादा | - | Limit |
| किणः | - | Scar | मांसविक्रयिकः | - | Meat seller |
| गुलिका | - | Tablet | वृतिः | - | Fence |
| चुटितवान् | - | Pinched | शम्बूकः | - | Snail |
| जटा | - | Matted and twished hair | शशः | - | Rabbit |
| | | | शावकः | - | Cub |
| ज्या | - | Bow string | सङ्गता | - | Joined |
| झञ्झावातः | - | Storm | सूकरः | - | Pig |
| तण्डुलः | - | Rice | स्थौल्यम् | - | Fatness, |
| ताटस्थ्यनीतिः | - | Non alignment | हसन्ती | - | Portable fire-place |
| तूणीरः | - | Quiner | | | |

* * *

वार्ताविशेषः –

# भारतेन कृतः अण्वस्त्र-निषेधप्रस्तावस्य तिरस्कारः

सप्टम्बर्मासस्य आरम्भे संयुक्तराष्ट्रसङ्घेन सर्व-सदस्यसभा आयोजिता आसीत् । अण्वस्त्र-निषेधसन्धेः प्रस्तावस्य विषये सर्वेषां सदस्यदेशानाम् अङ्गीकारं प्राप्तुम् एव तया एषा सभा आयोजिता आसीत् । गते जून्मासे जिनीवानगरे प्रवृत्ते समावेशे अण्वस्त्रनिषेधसन्धेः प्रस्तावस्य लेखनं जातम् । अण्वस्त्रनिषेधसन्धिप्रस्तावः एव 'सि.टि.बि.टि.' (काम्प्रहेन्सिव् टेष्ट् ब्यान् ट्रीटी) इति निर्दिश्यते ।

'एषः सन्धिप्रस्तावः सर्वैः सदस्यदेशैः अङ्गीकरणीयः' इति विषयः सर्वसदस्यसभायाम् उपस्थापितः आस्ट्रेलियादेशेन । किन्तु भारतम्, अन्ये केचन देशाः च तद्विषये विरोधं प्रकटितवन्तः ।



सप्टम्बर्मासस्य १० दिनाङ्के प्रवृत्ते समावेशे सदस्यदेशाः बहुमतयुक्तत्वेन एतं प्रस्तावम् अङ्गीकृतवन्तः । १८५ देशाः प्रस्तावं पुरस्कुर्वन्तः मतं दत्तवन्तः । भारतं, भूतान्, लिबिया इत्येते देशाः एतद्विषये विरोधध्वनिम् उत्थापितवन्तः । पञ्च देशाः समावेशे अनुपस्थिताः आसन् । केचन देशाः मतदानविषये ताटस्थ्यनीतिम् अवलम्बितवन्तः ।

भारतदेशः एतं सन्धिप्रस्तावं किमर्थं न पुरस्करोति ? पुरस्करणे का आपत्तिः ? इति प्रश्नः अस्मान् बाधेत । तत्र विवरणं तु एवम् अस्ति –

प्रपञ्चस्य अग्रगण्याः अमेरिका, इंग्लेण्ड्, रशिया, चीना, फ्रान्स् इत्येते देशाः एतावता एव बहूनि अण्वस्त्राणि निर्मितवन्तः सन्ति । ४४ देशाः अण्वस्त्रनिर्माणसमर्थाः सन्ति । तादृशेषु अन्यतमः अस्ति भारतदेशः । इतः पूर्वम् अण्वस्त्रनिषेधसन्धेः प्रस्तावार्थम् आयोजिते समावेशे संयुक्तराष्ट्रसङ्घेन त्रयः नियमाः विहिताः आसन् । ते च –

१. येनकेनचित् अपि देशेन इतःपरम् अण्वस्त्रं न निर्मातव्यम् ।
२. एतावता एव यैः देशैः अण्वस्त्राणि निर्मितानि, ते देशाः तानि सर्वाणि निर्मूलयेयुः । (तन्नाम नाशयेयुः)
३. प्रपञ्चे अण्वस्त्रयुद्धं यथा न प्रचलेत् तथा सर्वैः देशैः द्रष्टव्यम् । आन्ताराष्ट्रियशान्तिः परिरक्षणीया ।

भारतं भावयति यत् पूर्वप्रस्तुतः सन्धिः एतेषु त्रिषु कस्यचित् अपि नियमस्य साफल्यतायै न भवति इति । 'अन्यैः देशैः अण्वस्त्राणि न निर्मातव्यानि' इति ये पञ्च प्रमुखदेशाः वदन्ति ते स्वसमीपे स्थितानाम् अण्वस्त्राणां निर्मूलने अनासक्ताः । प्रत्युत ते विमुखताम् एव प्रदर्शयन्तः दृश्यन्ते । 'स्वसमीपे कानिचन वा अण्वस्त्रणि भवेयुः एव' इति अभिप्रयन्ति ते । चीनाफ्रान्स्प्रभृतयः सद्यःकाले एव अण्वस्त्रपरीक्षां कृतवन्तः दृश्यन्ते इत्येषा वस्तुस्थितिः भारतेन प्रदर्शिता । एतस्मात् सिद्धं यत् अण्वस्त्रनिषेध-प्रस्तावस्य प्रथमः नियमः एव अपालितः तिष्ठति इति । 'अण्वस्त्र- निर्मूलन-विषये समयनिश्चयं कर्तुम् अपि एषः सन्धिप्रस्तावः न अशक्नोत्' इत्येषः अंशः अपि भारतेन प्रतिपादितः । एवं स्थिते तृतीयनियमस्य विश्व-शान्तेः सिद्धिः कथं वा कार्यान्विता भवेत् ?

अङ्गीकारपत्रे हस्ताङ्कन-दानार्थं सदस्यदेशानां कृते त्रिवर्षात्मकः अवधिः दत्तः अस्ति संयुक्तराष्ट्रसङ्घेन । 'सन्धिपत्रे हस्ताङ्कनं न कृतं चेदपि अण्वस्त्रनिर्माणोद्देशः मम नास्ति' इति भारतेन स्वाभिप्रायः स्पष्टीकृतः अस्ति ।

भारतस्य अण्वस्त्रनिर्माणसामर्थ्यम् अस्ति चेदपि तस्य उपयोगः तु विश्वशान्तये एव तेन क्रियते, न तु युद्धार्थम् । एषः अंशः सर्वैः अवगन्तव्यः अस्ति ।

अण्वस्त्रनिषेधसन्धिपत्रे हस्ताङ्कनम् अकृतवतः भारतस्य विषये, तादृशम् एव व्यवहारं प्रदर्शितवताम् अन्यदेशानां विषये च संयुक्तराष्ट्रसङ्घः १९९९ तमे वर्षे कीदृशं कठोरव्यवहारं कुर्यात् इति तु इदानीं न ज्ञायते । कालः एव ज्ञापयिष्यति सर्वम् अपि ।



# रुद्रेशस्य नमस्कारः

रामनगरग्रामे गङ्गाधरः ग्रामाधिकारी आसीत् । तस्मिन् अहङ्कारः अधिकः आसीत् । कदाचित् सः कर्मकरं वीरभद्रम् उक्तवान् – ''यदा यदा अहं बहिः गमिष्यामि तदा तदा भवान् अपि मया सह आगच्छतु । कोऽपि मां न अभिजानाति चेत् भवान् तस्य पुरतः मम परिचयं वदतु'' इति ।

तदा श्रुत्वा वीरभद्रः पृष्टवान् – ''भवन्तं के न अभिजानन्ति इति मया कथं ज्ञातव्यम् ?'' इति ।

''अहं यदा ग्रामे अटन् भवामि तदा यः मां नमस्करोति सः मां जानाति इत्यर्थः । यः मां न नमस्करोति सः मां न जानाति इति भवान् चिन्तयतु'' इति उक्तवान् गङ्गाधरः ।

एतस्मात् गङ्गाधरस्य स्वभावं ज्ञातवान् वीरभद्रः । अतः यदा गङ्गाधरः बहिः गच्छति स्म तदा एतस्मिन् विषये जागरूकतया व्यवहरति स्म सः । केचन जनाः गङ्गाधरं दृष्ट्वा अनुक्षणम् एव नमस्कुर्वन्ति स्म । अपरिचिताः यदा प्राप्यन्ते तदा वीरभद्रः 'एषः ग्रामाधिकारी' इति गङ्गाधरस्य परिचयं कारयति स्म । तदा ते तं नमस्कुर्वन्ति स्म । कदाचित् परिचितः अपि विस्मरति चेत् वीरभद्रः ग्रामाधिकारिणः पृष्ठतः स्थित्वा 'नमस्करोतु' इति अभिनयेन दर्शयति स्म ।

रुद्रेशः नाम कश्चित् तद्ग्रामे आसीत् । सः स्वाभिमानी, गर्वितः च अस्ति इति केचन वदन्ति स्म । कदाचित् तस्य पुरतः एव गङ्गाधरः वीरभद्रः च गच्छन्तौ आस्ताम् । तथापि रुद्रेशः गङ्गाधरस्य नमस्कारम् अकृत्वा अग्रे गतवान् ।

'' सः कः ? मां सः न दृष्टवान् वा ? मम परिचयः तस्य नास्ति वा ?'' इति गङ्गाधरः कोपेन वीरभद्रं पृष्टवान् ।

रुद्रेशस्य स्वभावं ज्ञातवान् वीरभद्रः –

"भवतः परिचयः तस्य अस्ति एव । सः भवन्तं न दृष्टवान् स्यात्" इति गङ्गाधरम् उक्तवान् ।

वीरभद्रस्य वचनात् गङ्गाधरस्य तृप्तिः न जाता । "गच्छतु ! एतस्मिन् विषये निर्णयः भवेत् एव । सः यावत् मां न नमस्करोति तावत् गृहं न गच्छेयम् अहम्" इति वदन् गङ्गाधरः ततः प्रतिनिवृत्तवान् ।

उभौ अपि रुद्रेशम् अनुसृत्य किञ्चिद्दूरं गतवन्तौ । रुद्रेशः कस्यचित् आपणस्य पुरतः स्थित्वा कदलीफलं क्रीणन् आसीत् । गङ्गाधरः वीरभद्रः च तेन मार्गेण एव गत्वा तस्य आपणस्य पुरतः एव स्थितवन्तौ । रुद्रेशः तौ उभौ अपि आपादमस्तकं दृष्ट्वा स्वकार्ये मग्नः अभवत् । तदा गङ्गाधरः वीरभद्रं शनैः उक्तवान् – "वीरभद्र ! सः मां दृष्टवान् । परन्तु नमस्कारं न कृतवान्" इति ।



"प्रायः सः न जानाति यत् भवान् कः इति । सुसमयं दृष्ट्वा भवतः परिचयं कारयामि अहम्" इति वीरभद्रः उक्तवान् ।

"पुरतः एव सः जनः अस्ति चेदपि भवान् वतति खलु - सुसमयं दृष्ट्वा परिचयं कारयामि इति ! इदानीम् एव तत् कार्यं करोतु भोः" इति वीरभद्रं सूचितवान् गङ्गाधरः ।

अनन्तरं वीरभद्रः रुद्रेशेन सह सम्भाषणं कृत्वा गङ्गाधरस्य परिचयं कारितवान् ।

तत् श्रुत्वा रुद्रेशः - " एवं वा ! ग्रामाधिकारी नूतनः इति वार्ता श्रुता आसीत् मया । एषः एव वा सः ! द्रष्टुं तु सम्यक् अस्ति" इति वीरभद्रं वदन् - "स्वामिन् ! सौन्दर्येण किमपि प्रयोजनं नास्ति । अस्वास्थ्यकारणतः पूर्वतनग्रामाधिकारी रामनगरतः गतवान् अस्ति । परन्तु तस्मिन् ग्रामजनानां सर्वेषाम् अतीव प्रीतिः आसीत् । भवान् अपि तादृशः उत्तमः भवतु" इति गङ्गाधरम् उक्तवान् ।

रुद्रेशः नमस्कारम् अकृत्वा उपदेशं कृतवान् इति कारणतः गङ्गाधरः नितरां कुपितः अभवत् । सः वीरभद्रं जागरयन् तं चुटितवान् । अनुक्षणम् एव वीरभद्रः - "स्वामिन् ! भवान् ग्रामाधिकारिणम् इदम्प्रथमतया पश्यन् अस्ति । तं नमस्करोतु तावत्" इति रुद्रेशम् उक्तवान् ।

"अहो ! एवं करणीयम् इति दर्शनसमनन्तरं मम मनसि न स्फुरितम् एव । अलं गतस्य चिन्तया । मम नमस्कारं



स्वीकर्तुम् अद्य एतस्य भाग्यं नास्ति इति भावयतु भवान्'' इति वीरभद्रम् उक्तवान् रुद्रेशः ।

''इदानीम् अहं भवन्तं स्मारितवान् खलु । इदानीं वा नमस्कारं करोतु भवान्'' इति पुनः उक्तवान् वीरभद्रः ।

तदा रुद्रेशः कोपेन - ''यस्य जनस्य दर्शनात् गौरवभावः मयि उत्पद्यते तम् एव अहं नमस्करोमि, न तु अन्यस्य वचनं श्रुत्वा। इदानीं भवतः वचनं श्रुत्वा तं नमस्करोमि चेत् भवतः वचनाय गौरवं दत्तं भवति, न तु तस्मै'' इति उक्तवान् ।

''भवतः वचनस्य आशयः कः ? 'मां नमस्करोतु' इति तेनैव भवान् वक्तव्यः आसीत् वा ?'' इति पृष्टवान् वीरभद्रः ।

''वीरभद्रः ! शृणोतु तावत् । यः सूचयित्वा नमस्कारं प्राप्नोति तस्मै भिक्षुकः अपि गौरवं न ददाति । एतादृशं ज्ञानं भवतः न स्यात् । परन्तु ग्रामाधिकारिणः तु भवेत् एव'' इति उक्तवान् रुद्रेशः ।

एतस्मात् अतीव अपमानितः गङ्गाधरः मौनं स्थितवान् आसीत् । गृहं प्रति गमनस्य अनन्तरं पुनः रुद्रेशस्य विषये गङ्गाधरः यदा कटुवचनानि उक्तवान् तदा वीरभद्रः मध्ये एव तत् निवार्य - ''स्वामिन् ! तस्य विषये भवान् मा चिन्तयतु । सः रुद्रेशः ज्येष्ठेभ्यः, देवेभ्यः च ऋते अन्यान् न नमस्करोति । तस्य विषये हस्तक्षेपः क्रियते चेत् अवमानः एव भवति, न तु किमपि प्रयोजनम्'' इति सान्त्वनं कृतवान् ।

''अहं ग्रामाधिकारी अस्मि । यः मां न नमस्करोति तेन हानिः अनुभोक्तव्या एव'' इति कोपेन उक्तवान् गङ्गाधरः । ततः सः एतस्य प्रतीकारं कर्तुं समयं प्रतीक्षमाणः स्थितवान् ।

अनन्तरं ग्रामाधिकारी रुद्रेशस्य स्वभाव-विषये सर्वान् विचार्य ज्ञातवान् यत् - ''रुद्रेशः उत्तमः । सः सर्वेषां साहाय्यं कुर्वन् सत्यं नीतिं च अनुसरन् अस्ति । सः कदापि दोषं न करोति'' इति । कथं रुद्रेशः मम समीपम् आनेतव्यः इति बहुधा विचिन्त्य गङ्गाधरः कश्चित् उपायम् अन्विष्टवान् ।

अथ कदाचित् रुद्रेशः सुन्दरनामकेन निर्धनकृषिकेण मिलितः । सः रुद्रेशम् उक्तवान् - ''स्वामिन् ! यदा गङ्गाधरः मिलति स्म तदा सर्वदा अहं तं नमस्करोमि स्म । कदाचित् गमनसमये अनवधानेन तम् अहं न नमस्कृतवान् । एतस्मात् सः कुपितः

अभवत् । एतावत्पर्यन्तम् अहं करं भागशः अर्पयामि स्म । परन्तु इदानीं सः वदति यत् सर्वम् अपि युगपत् एव दातव्यम् इति । मया किं करणीयम् ?'' इति ।

''तादृशजनान् भवान् किमर्थं नमस्करोति ? तेन कः लाभः भवतः ? भवता दातव्यं धनम् अहं ग्रामाधिकारिणे दास्यामि । इतःपरं भवान् गङ्गाधरं मा नमस्करोतु'' इति उक्तवान् रुद्रेशः ।

''अधिकारी न नमस्क्रियते चेत् हानिः न भवेत् वा ?'' इति पृष्टवान् सुन्दरः ।

तदा रुद्रेशः उक्तवान् - ''यः प्रतिदिनं नमस्करोति सः कदाचित् न नमस्करोति चेत् अपराधः । यः प्रतिदिनं न नमस्करोति सः कदाचित् नमस्करोति चेत् सन्तोषः भवति । यदा आवश्यकता अस्ति तदा केवलम् अधिकारिणः नमस्करणीयाः । तेन प्रयोजनं सिद्ध्यति । अन्यथा सर्वः अपि नमस्कारः निष्प्रयोजकः भवेत्'' इति ।

सुन्दरः एतां वार्तां यावत् गङ्गाधरं सूचितवान् ततः पूर्वम् एव रुद्रेशस्य द्वारा केचन ज्ञातवन्तः । अतः तदारभ्य केचन गङ्गाधरस्य नमस्कारं परित्यक्तवन्तः । केनचित् उपायेन रुद्रेशः भायनीयः इति गङ्गाधरस्य उद्देशः आसीत् । परन्तु तस्य उपायस्य विपरीतः एव परिणामः जातः आसीत् इदानीम् । 'रुद्रेशस्य कारणतः ग्रामे मम गौरवं नश्यति खलु' इति गङ्गाधरेण महती चिन्ता प्राप्ता ।

एवं सति कदाचित् रुद्रेशस्य पौत्रः सर्पेण दष्टः । तदा सः आक्रोशं कुर्वन् पतितवान् । रुद्रेशस्य पुत्रः वैद्यम् आनेतुं गतवान् । एतां वार्तां ज्ञात्वा गङ्गाधरः उक्तवान् - ''अहं सर्पमन्त्रं जानामि । रुद्रेशः आगत्य मां नमस्करोति चेत् अहं तस्य पौत्रस्य उज्जीवनं कुर्याम्'' इति ।



एतत् श्रुत्वा अपि रुद्रेशः गङ्गाधरस्य गृहं न गतवान् । वैद्येन उत्तमम् औषधं दत्तम् इति कारणतः तस्य पौत्रः जीवितवान् । परन्तु रुद्रेशस्य आग्रहस्वभावात् सर्वे जुगुप्सिताः अभवन् ।

केषाञ्चित् दिनानाम् अनन्तरं रुद्रेशस्य कर्मकरः अपि सर्पेण दष्टः । सः अनुक्षणम् एव - ''स्वामिन् ! येन सर्पेण भवतः पौत्रः दष्टः आसीत् तं सर्पम् अहं मारितवान् । तेन सह यः अपरः सर्पः आसीत् सः द्वेषेण मां दष्टवान् अस्ति । अतः मन्त्रेण एव अहं जीवितुं शक्नोमि । अहं तु सामान्यः कर्मकरः अस्मि । अतः गङ्गाधरः मम समीपम् आगत्य मन्त्रोच्चारणं न कुर्यात् । मम जीवनं समाप्तम् एव'' इति रोदनं कृतवान् ।

''भवान् चिन्तां मा करोतु । गङ्गाधरम् अहम् आनेष्यामि । तावता वैद्यस्य हस्तात् औषधं स्वीकरोतु'' इति तस्य सान्त्वनं कृत्वा रुद्रेशः ग्रामाधिकारिणः गङ्गाधरस्य गृहं गतवान् । तत्र गङ्गाधरः वीरभद्रेण सह सम्भाषणं कुर्वन् आसीत् । तदा रुद्रेशः गङ्गाधरं नमस्कृत्य प्रवृत्तं सर्वम् उक्तवान् । ''भवान् आगत्य मन्त्रोच्चारणं कृत्वा कर्मकरम् उज्जीवयतु । तथा करोति चेत् प्रतिदिनम् आगत्य एवमेव अहं भवन्तं नमस्करिष्यामि'' इति उक्तवान् च ।

तस्य वचनं श्रुत्वा गङ्गाधरः दिङ्मूढः जातः । शिरः अवनमय्य सः क्षीणस्वरेण - ''भवान् मां नमस्करोतु इति उद्देशेन मया तथा उक्तम् । वस्तुतः अहं सर्पमन्त्रं न जानामि एव'' इति उक्तवान् ।

तदा रुद्रेशः हसन् - ''सर्पमन्त्रे मम विश्वासः नास्ति एव । इदानीं सर्पदंशनेन कर्मकरे विषवर्धनं न जातम् । परन्तु सर्पमन्त्रविषये तस्य विश्वासः अस्ति । भवान् यदि मन्त्रोच्चारणं न करोति तर्हि अन्धविश्वासेन एव सः मृतः भवेत् । अतः कृपया भवान् आगत्य मन्त्रोच्चारणं करोतु'' इति उक्तवान् ।

अनन्तरं गङ्गाधरः रुद्रेशेन यथा उक्तं तथा एव कृतवान् । कर्मकरः अपि जीवितः । परन्तु ततः आरभ्य यदा 'रुद्रेशः गङ्गाधरं नमस्करोति स्म तदा गङ्गाधरः तत् निवारयति स्म । स्वयम् एव रुद्रेशं नमस्करोति स्म च ।






# ऋणस्य प्रतिसङ्ग्रहः

विरूपाक्षपुरे शरभेन्द्रः नाम कश्चन महाधनिकः आसीत् । श्रीधरनामकः ततः धनं स्वीकृत्य गतः दीर्घकालस्य अनन्तरम् अपि ऋणं न प्रत्यर्पितवान् एव । वृद्धिम् अपि अविहाय श्रीधरेण सहस्त्रं रूप्यकाणि दातव्यानि भवन्ति स्म । तानि प्राप्तुं शरभेन्द्रः विविधान् उपायान् आश्रितवान् । तथापि ऋणं न प्रतिप्राप्तम् ।

विरूपाक्षपुरस्य पार्श्वे नन्दिग्रामः अस्ति । नन्दिग्रामस्य भूस्वामी शरभेन्द्रस्य मित्रम् । सः योग्यम् एकं तरुणं स्वकार्यालये उद्योगित्वेन नियोक्तुम् इच्छति स्म । सः एतं विषयं शरभेन्द्रं निवेद्य- 'योग्यस्य चयनभारः भवतः एव' इति सूचितवान् । शरभेन्द्रः एतत् अङ्गीकृतवान् ।

शरभेन्द्रः उद्योगं दापयति इति वार्ता ज्ञात्वा मल्लेश-भीमेशनामकौ तरुणौ शरभेन्द्रस्य समीपम् आगतवन्तौ । तयोः योग्यतादिकं परिशील्य शरभेन्द्रः उक्तवान् - ''भवतोः अन्यतरः एव नन्दिग्राम-भूस्वामिनः कार्यालये उद्योगं प्राप्तुम् अर्हति । तत्र यः उद्योगं प्राप्नोति तेन ऋणप्रतिसङ्ग्रहादीनि विशिष्टानि कार्याणि करणीयानि भवन्ति । अतः मया भवतोः कृते एका परीक्षा निश्चीयते । यः तस्यां परीक्षायाम् उत्तीर्णः भविष्यति सः एव उद्योगं प्राप्स्यति । एतद्ग्रामीणः श्रीधरः बहोः कालात् पूर्वम् एव मत्तः ऋणं स्वीकृतवान् आसीत् । दीर्घकालः अतीतः चेदपि ऋणं तु न प्रत्यागतम् । अतः यः ततः ऋणं प्रतिसङ्गृह्णाति तस्मै मया उद्योगः दाप्यते । दिनत्रयाभ्यन्तरे एतत् कार्यं साधनीयम्'' इति । उभौ अपि एतत् अङ्गीकृतवन्तौ ।

दिनत्रयानन्तरम् उभौ अपि शरभेन्द्र-समीपम् आगतवन्तौ । ''ऋणं प्रतिसङ्गृहीतं

वा ?'' इति भीमेशं पृष्टवान् भूस्वामी । अनङ्गीकारपूर्वकं शिरः चालयन् लज्जया शिरः अवनमय्य स्थितवान् भीमेशः ।

''भवता कार्यं किं साधितम् ?'' इति मल्लेशं पृष्टवान् शरभेन्द्रः ।

''आम् । समग्रं धनं सङ्गृह्य आगतवान् अस्मि अहम्'' इति साभिमानम् उक्त्वा धनग्रन्थिं शरभेन्द्राय दत्तवान् मल्लेशः ।

सन्तुष्टः शरभेन्द्रः - ''साधु मल्लेश ! श्वः भवान् नन्दिग्रामस्य भूस्वामिनं पश्यतु । सः उद्योगे भवन्तं नियोक्ष्यति'' इति उक्तवान् ।

उभौ अपि तरुणौ शरभेन्द्रस्य अनुज्ञां प्राप्य ततः निर्गतवन्तौ । मार्गे भीमेशः मल्लेशम् उद्दिश्य - ''मित्र ! महता प्रयत्नेन अपि श्रीधरात् ऋणं प्रतिप्राप्तुं न शक्तवान् अहम् । भवान् एतत् कार्यं कथं साधितवान् ?'' इति आश्चर्येण पृष्टवान् ।

तदा मल्लेशः मन्दहासपूर्वकम् उक्तवान् - ''उद्योगः कथञ्चित् प्राप्तव्यः एव इति उद्देशेन मया कश्चन उपायः आश्रितः । अहं जानामि स्म यत् ऋणप्रत्यर्पणे श्रीधरस्य प्रवृत्तिः नास्ति इति । अतः अहं तस्य समीपं गत्वा उक्तवान् - 'भवते द्विसहस्रं रूप्यकाणि ऋणरूपेण अहं दास्यामि । किन्तु भवता आदौ शरभेन्द्रस्य सहस्र-रूप्यकात्मकम् ऋणं प्रत्यर्पणीयम्' इति । श्रीधरः एतं प्रस्तावम् अङ्गीकृतवान् । अतः अहम् ऋणसन्धिपत्रं लेखयित्वा श्रीधराय सहस्रं रूप्यकाणि दत्तवान् । पुनः सहस्रं रूप्यकाणि शरभेन्द्राय दत्तवान् च'' इति ।

''अग्रे द्विसहस्ररूप्यकात्मकम् ऋणं श्रीधरतः कथं वा प्रतिसङ्गृह्यते भवता ?'' इति पृष्टवान् भीमेशः ।

''तदर्थम् अपि उपायः चिन्तितः एव मया । श्रीधरः केषुचित् वञ्चनाप्रकरणेषु अक्रमव्यवहारेषु च सहभागी आसीत् इति अहं जानामि । तस्य एतादृशं व्यवहारं नन्दिग्रामस्य भूस्वामी सम्यक् जानाति । अतः एव ततः भीतः अस्ति श्रीधरः । यदि अहं भूस्वामिनः कार्यालये उद्योगं प्राप्नुयां तर्हि श्रीधरः मत्तः अपि भीतः भवेत् एव । अतः सः निश्चिते समये ऋणं प्रत्यर्पयिष्यति'' इति उक्तवान् मल्लेशः ।

एतत् श्रुत्वा भीमेशः मल्लेशस्य बुद्धिमत्तां प्रशंसन् - ''वस्तुतः एतस्मिन् उद्योगे भवान् एव नियुक्तिम् अर्हति'' इति उक्तवान् ।






# १६

[विंशतिवर्षाणाम् अनन्तरं स्वदेशम् आगतेन रूपधरेण भिक्षुकवेषः धरणीयः अभवत् । तस्य वास्तविकं रूपं तदीयः पुत्रः धीरमतिः जानाति स्म, न अन्ये । रूपधरस्य पत्नीं पद्ममुखीं परिणेतुम् इच्छन्तः, रूपधरगृहे वसन्तः दुष्टाः केचन भिक्षुकवेषधारिणः रूपधरस्य अपमाननं कृतवन्तः । किन्तु रूपधरः सर्वं सहमानः मौनं स्थितवान् आसीत् । रात्रौ सर्वेषां निर्गमनस्य अनन्तरं प्रकोष्ठे रूपधरः धीरमतिः च अवशिष्टौ । तदनन्तरम् ....]

रूपधरः धीरमतिं पश्यन् - ''वत्स ! भित्तिषु स्थितानि सर्वाणि आयुधानि सङ्ग्रहप्रकोष्ठे स्थापयतु । 'तानि कुत्र' इति कोऽपि पृच्छति चेत् 'रहसि स्थापितानि' इति वदतु'' इति सूचितवान् ।

धीरमतिः मातुः समीपे स्थितां बहुकीर्तिनामिकां दासीम् आहूय - ''अम्ब ! पितुः निर्गमनानन्तरम् आयुधानां रक्षणविषये केनापि अवधानं न दत्तम् एव । सर्वाणि आयुधानि किट्टयुक्तानि जातानि सन्ति । एतेषां रक्षणभारः ज्येष्ठस्य मम एव खलु ?'' इति उक्तवान् ।

''युक्तम् उक्तं भवता । आयुधानां विषये यथा तथैव अन्यविषये अपि अवधानं भवतु भवतः । गृहस्य स्वामित्वभारं भवान् एव निर्वहतु इतः परम्'' इति उक्त्वा ततः निर्गतवती बहुकीर्तिः ।

तस्याः निर्गमनस्य अनन्तरं रूपधरः धीरमतिः च भित्तिषु स्थितानि आयुधानि स्वीकृत्य सङ्ग्रहप्रकोष्ठे स्थापितवन्तौ । एतत्



उपवेशनार्थम् आसनम् आनायितवती । रूपधरस्य उपवेशनस्य अनन्तरं सा तं पृष्टवती – "महाशय ! कः भवान् ? कः देशः भवतः ?" इति ।

रूपधरः स्वविषये एकां कल्पितकथाम् उक्तवान् - "अहं सिसिलीदेशीयः अस्मि । युद्धं प्रति गमानात् पूर्वं रूपधरः मम गृहे अतिथिरूपेण उपस्थितः आसीत्" इति । ततः पद्ममुख्याः विश्वासस्य प्राप्त्यर्थं सः रूपधरेण धृतस्य वस्त्रस्य विवरणम्, आयुधानां विवरणं, सेवकानां नामानि च सूचितवान् । युद्धं प्रति प्रस्थानसमये तानि वस्त्राणि रूपधराय स्वयं दत्तवती आसीत् पद्ममुखी । अतः तस्य विवरणस्य श्रवणात् सा भिक्षुकेण उच्यमानायां कथायां पूर्णविश्वासं कृतवती ।

कार्यं समाप्य रूपधरं तत्रैव परित्यज्य धीरमतिः स्वप्रकोष्ठं प्रति गतवान् ।

ततः अल्पे एव काले पद्ममुखी अधः आगतवती, विशालप्रकोष्ठे आसने उपविष्टवती च । दास्यः हसन्तिकायां नूतनकाष्ठानि संयोज्य अग्निम् उद्दीपितवत्यः । काचित् दासी रूपधरं दृष्ट्वा उक्तवती - "इदानीम् अपि अत्रैव अस्ति वा भवान् ? इतोऽपि भवतः उदरं किं न पूर्णम् ?" इति ।

तस्याः व्यवहारं दृष्ट्वा असन्तुष्टा पद्ममुखी - "अये, एतेन सह अहं वार्तालापं कर्तुम् इच्छामि । भवती तु अपमानकरं व्यवहारं कुर्वती अस्ति ! कथम् एतादृशानि वचनानि भवत्याः मुखात् निर्गतानि ?" इति तां दासीं सम्यक् तर्जयित्वा रूपधरस्य

ततः सा दासीं बहुकीर्तिम् आहूय आदिष्टवती - "एषः अतिथिः मम आर्यपुत्रस्य मित्रम् । एतस्य पादौ क्षालयतु भवती" इति । बहुकीर्तिः एकस्मिन् पात्रे उष्णजलं शीतलजलं च संयोज्य अतिथेः पादौ क्षालयितुम् उद्युक्ता अभवत् । तत्समये रूपधरः स्वस्य वस्त्रं किञ्चित् उन्नीतवान् । तदा पादे यः किणः दृष्टः ततः सा झटिति अभिज्ञातवती यत् एषः रूपधरः एव इति । आश्चर्याघातं प्राप्तवत्याः तस्याः हस्ततः जलपात्रं सशब्दं पतितं भग्नं च । यदा सा किमपि वक्तुम् उद्युक्ता तदा रूपधरः स्वहस्तेन तस्याः मुखं पिधाय - "अम्ब ! रहस्यम् उद्घाट्य भवती मम नाशं मा कल्पयतु कृपया । विंशतिवर्षाणि यावत् बहुविधानि कष्टानि अनुभूय अहम् इदानीं

स्वगृहं प्राप्तवान् अस्मि । इतोऽपि कष्टस्य कश्चन अवशेषः अस्ति । यावत् स च न अपगमिष्यति तावत् मम अभिज्ञानं कोऽपि यथा न प्राप्नुयात् तथा सहकरोतु भवती'' इति सूचितवान् । बहुकीर्तिः संज्ञया एव स्वस्य सम्मतिं संसूच्य जलस्य आनयनार्थं ततः उत्थाय गतवती ।

यं किणं दृष्ट्वा सा दासी रूपधरम् अभिज्ञातवती, स च किणः एवं जातः आसीत् । यदा रूपधरः तरुणः आसीत् तदा उपायनदाननिमित्तं मातुलाः रूपधरं स्वगृहम् आनायितवन्तः आसन् । तत्काले रूपधरः मातुलैः सह मृगयार्थं गतवान् आसीत् । मृगयाकाले कश्चन वन्य सूकरः शृङ्गेण रूपधरं व्रणितं कृतवान् आसीत् । अनन्तरकाले व्रणः तु अपगतः आसीत्, किन्तु किणः तत्र दृश्यते स्म ।

पद्ममुखी तु न जानाति स्म यत् बहुकीर्तिः स्वामिनम् आभिज्ञातवती अस्ति इति । रूपधरः पादौ मार्जयित्वा यदा आगतवान् तदा पद्ममुखी तम् उक्तवती - ''आर्य ! अद्यपर्यन्तं मम पुत्रः अल्पवयस्कः आसीत् । किन्तु इदानीं सः प्रौढः जातः अस्ति । सम्पत्तिगृहादीनां परिरक्षणे तेन इदानीं विशेषतः चिन्तनीयम् अस्ति । एतादृशस्थितौ ममापि रक्षणस्य भारः तस्य उपरि न भवेत् इति मम आशयः । गृहे स्थिताः राजकुमाराः मां परिणेतुम् इच्छन्तः अत्र वसन्तः सम्पत्तेः नाशनं कुर्वन्तः सन्ति । एतत्कारणतः मम पुत्रः नितरां दुःखितः अस्ति । अतः मम तु भाति यत् मया स्वयंवरः अङ्गीकरणीयः इति । मम पतिः



द्वादश परशून् एकरेखायां स्थापयित्वा तेषां मूलभागस्थे रन्ध्रे निर्बाधबाणप्रयोगं करोति स्म । तद्द्वारा लक्ष्यच्छेदनं करोति स्म । अतः मया निर्णीतम् अस्ति यत् एतेन प्रकारेण बाणप्रयोगं कृत्वा यः लक्ष्यच्छेदनं करोति सः एव परिणेतव्यः इति'' इति ।

ततः सा स्वप्रकोष्ठं गत्वा शयनं कृतवती । रूपधरः प्रकोष्ठस्य पुरतः अजचर्म प्रसार्य तदुपरि शयनं कृतवान् । आरात्रि तेन निद्रा न प्राप्ता । प्रतीकारसाधनोपायं चिन्तयन् सः रात्रिं यापितवान् । प्रातःकाले शीघ्रम् एव उत्थाय सः भगवतः प्रार्थनां कृतवान् ।

प्रातः सर्वे स्वस्वकार्यार्थं निर्गतवन्तः । वराहपालकः त्रिभिः दृढकायैः वराहैः सह तत्र आगतवान् । सः रूपधरं दृष्ट्वा

उक्तवान् - "अत्रत्याः जनाः भवतः योगक्षेमादिकं, न जाने, कथं दृष्टवन्तः इति। किं ते स्वदौष्ट्यं प्रदर्शयन्तः एव सन्ति, उत किञ्चित् वा सद्व्यवहारं प्रदर्शयन्तः सन्ति ?" इति ।

"ते तु दुष्टाः । पाशविकः एव व्यवहारः तेषाम् । एतान् भगवान् अवश्यं दण्डयिष्यति" इति उक्तवान् रूपधरः ।

तत्समये एव अजपालकः तत्र आगतवान् । सः आत्मना सह स्थूलान् अजान् अजशावकान् च आनीतवान् आसीत् । सः भवनस्य पुरतः तान् अजान् बध्नन् रूपधरं दृष्ट्वा - "अये भिक्षुक ! इदानीम् अपि अत्रैव दृश्यते खलु भवान् । एतस्मिन् महानगरे भिक्षायाचनार्थं किं भवता अन्यत् गृहम् एव न प्राप्तम् ?" इति पृष्टवान् ।

रूपधरः उत्तरं किमपि न दत्तवान् । तस्य अन्तरङ्गे क्रोधाग्निः ज्वलन् आसीत् ।

अत्रान्तरे सुखप्राप्तिनामकः कश्चन पशुपालकः धेन्वा अजाभिः च सह तत्र आगतवान् । सः रूपधरं दृष्ट्वा आश्चर्यम् अनुभवन् वराहपालकं पृष्टवान् - "एषः कः ? कस्मात् देशात् आगतः अस्ति एषः ?" इति । तं वृद्धं भिक्षुकं दृष्ट्वा सः स्वकीयं स्वामिनं स्मृतवान् आसीत् । स्वामिनः स्मरणात् तस्य नेत्राभ्याम् अश्रूणि आगतानि । सः रूपधरं पश्यन् उक्तवान् - "मम स्वामी अपि भवान् इव मलिनानि छिन्नानि च वस्त्राणि धृत्वा निर्गतिकतया अटन् स्यात् । तथापि मम तु आशा अस्ति यत् सः कदाचित् वा प्रत्यागच्छेत् एव इति यदि तस्य प्रत्यागमनाशा न स्यात् तर्हि को वा एतेषां दुष्टानां सेवां कुर्यात् ?" इति ।

तत् श्रुत्वा रूपधरः उक्तवान् - "भवान् ऋजुस्वभावयुक्तः इति भाति । अलं भीत्या । भवतः अत्र उपस्थितौ एव भवतः



स्वामी प्रत्यागत्य एतेषां सर्वेषां दुष्टानां संहारं करिष्यति'' इति ।

तस्मिन् एव काले ते सर्वे दुष्टाः सम्भूय धीरमतेः हननार्थम् उपायं चिन्तयन्तः आसन् । तन्मध्ये कश्चित् उत्थाय उक्तवान् - ''मित्राणि ! अपशकुनानि दृश्यन्ते इदानीम् । एवं स्थिते इदानीं धीरमतेः हननार्थं प्रयत्नः असफलतायै भवेत् । अतः इदानीं तादृशः प्रयत्नः मास्तु । आदौ सर्वे भोजनं करवाम'' इति ।

ततः सर्वे उत्थाय भोजनार्थं पुरतः स्थितं प्रकोष्ठं प्रति प्रस्थितवन्तः । तत्र गत्वा खादनार्थं पशुमांसं सज्जीकृत्य सन्तोषेण भोजनम् आरब्धवन्तः ।

द्वारपार्श्वे एव धीरमतिः रूपधरस्य निमित्तम् एकं भोजनपीठम्, आसन्दं च सज्जीकृतवान् । ततः पितरं रूपधरम् उद्दिश्य उक्तवान् - ''भवान् निरातङ्कं भोजनं करोतु तावत् । कोऽपि भवतः अपमाननं यथा न कुर्यात् तथा अहं पश्यामि । एतत् मम पितुः गृहं, न तु प्राङ्गणं मार्गः वा । अत्रत्या सम्पत्तिः मदीया । अत्र सम्पूर्णः अधिकारः मम एव । अत्र उपस्थितान् अहं निवेदयितुम् इच्छामि यत् ये असद्व्यवहारं प्रदर्शयन्ति ते निश्चयेन दण्ड्यन्ते इति'' इति ।

धीरमतेः एतत् वचनं सर्वेषु आश्चर्यम् अजनयत् । दुर्बुद्धिः स्वमित्राणि उद्दिश्य उक्तवान् - ''श्रुतं खलु एतस्य उद्धतं वचनम् ! अद्य अस्माभिः अपशकुनानि दृष्टानि इत्यतः एषः जीवितः । अन्यथा अहं क्षणमात्रेण एतस्य मुखपिधानम् अकरिष्यम्'' इति ।

धीरमतिः अपि एतत् वचनं श्रुतवान् । तथापि उपेक्षाभावं प्रदर्शयन् मौनम् आश्रितवान् । तेषु दुष्टेषु अश्वनिपुणः नाम कश्चन गर्वितः धनिकः आसीत् । सः





स्वानुचरान् उद्दिश्य उक्तवान् - ''पश्यन्ति खलु भवन्तः - एषः निर्गतिकः भिक्षुकः समानपङ्क्तौ उपविश्य अस्माभिः सह भोजनं पानं च कुर्वन् अस्ति इति ! एतं सम्यक् पुरस्कृत्य सन्तोषम् अनुभवाम वयम् । पश्यन्तु इदानीम् अहम् एतं कथं पुरस्करोमि इति'' इति उक्त्वा धेनुखुरपट्टिकायुगलं स्वीकृत्य रूपधरम् उद्दिश्य वेगेन क्षिप्तवान् । रूपधरः झटिति पार्श्वे अपसृत्य व्रणात् आत्मानं रक्षितवान् ।

तदा धीरमतिः महता क्रोधेन - ''अये, अश्वनिपुण ! भवतः क्षेपणात् एषः अतिथिः यदि व्रणितः अभविष्यत् तर्हि मम शूलायुधं भवतः हृदये लग्नम् अभविष्यत् । अहं पुनरेकवारं शान्ततया एव निवेदयितुम् इच्छामि यत् - आत्मनियन्त्रणपूर्वकः व्यवहारः भवताम् एव क्षेमाय इति । मर्यादाम् अतिक्रम्य व्यवहारः इतः परं न सह्यते अत्र'' इति उक्तवान् ।

तदा सर्वे मौनम् आश्रितवन्तः । क्षणकालानन्तरम् एकः उत्थाय - ''मित्राणि ! एतस्य भिक्षुकस्य कारणतः किमर्थं परिस्थितेः कलुषीकरणम् ? अलं भिक्षुकपीडनेन'' इति उक्त्वा धीरमतिम् उद्दिश्य - ''धीरमते ! वयं भवतः मातुः स्वयंवरम् एव इच्छामः । वयं न जानीमः यत् सा अस्मासु कञ्चित् कुतो वा न वृणोति इति'' इति उक्तवान् ।

द्वारसमीपे स्थिते आसने उपविष्टा पद्ममुखी एतत्सर्वं श्रुतवती आसीत् । सा ततः उत्थाय तं प्रकोष्ठं गतवती, यत्र च तस्याः पत्युः वस्तूनि स्थापितानि आसन् । तत्र रूपधरस्य धनुः तूणीरः च आसीत् । कश्चित् तत् धनुः तूणीरं च रूपधराय उपायनीकृतवान् आसीत् । युद्धार्थं गमनसमये रूपधरः तदुभयं न नीतवान् आसीत् । पद्ममुखी तत् धनुः अङ्के स्थापयित्वा किञ्चित्कालम् अश्रूणि स्रावितवती । ततः अश्रूणि मार्जयित्वा धनुः तूणीरं च गृहीत्वा अधः आगतवती । सेवकाः दण्डरहितान् परशून् वस्त्रेण बद्ध्वा ताम् अनुसृतवन्तः ।

पद्ममुखी विशालप्रकोष्ठस्य द्वारे स्थित्वा मुखम् अवगुण्ठनेन आच्छाद्य सर्वान् उद्दिश्य - ''भोः भोः, श्रृण्वन्तु अत्र । भवन्तः सर्वे मां परिणेतुम् इच्छन्तः अत्र आगत्य मम गृहे वासं कृतवन्तः । अत्र सुखेन खादन्तः, पिबन्तः, अत्रत्यां सम्पत्तिं

लुण्ठयन्तः सन्ति भवन्तः । किन्तु भवत्सु कोऽपि स्वसामर्थ्यं मत्पुरतः न निरूपितवान्, येन अहं भवत्सु कञ्चित् परिणयेयम् । आदौ भवन्तः स्वयोग्यतां निरूप्य उपायनरूपेण मां प्राप्नुवन्तु । अत्र पश्यन्तु - मम पत्युः धनुः अस्ति अत्र । एतस्मिन् ज्याम् आरोप्य यः द्वादश-परशुरन्ध्रमार्गेण बाणं सम्प्रेष्य लक्ष्यच्छेदनं करोति तम् एव अहं परिणेष्यामि'' इति उक्तवती ।

एतावत् उक्त्वा सा वराहपालकं स्वसमीपम् आहूय धनुः तूणीरं परशुं च तस्मै समर्प्य - 'सर्वेभ्यः एतत् दर्शयतु' इति सूचितवती । धनुर्बाणादिकं हस्तेन स्वीकुर्वतः वराहपालकस्य नेत्राभ्याम् अश्रूणि निर्गतानि । द्वारे स्थित्वा पश्यतः सुखप्राप्तेः नेत्राभ्याम् अपि अश्रूणि उत्पन्नानि । रुदन्तौ तौ दृष्ट्वा दुर्बुद्धिः उक्तवान् - ''स्त्री इव किमर्थं विलपतः भवन्तौ ? यदि रोदनम् एव करणीयं तर्हि बहिः गत्वा कामं रोदनं क्रियताम् । अस्माभिः तु अपूर्वा परीक्षा सम्मुखीकरणीया अस्ति इदानीम् । धनुषः दण्डस्य अवनमनं तावत् सुकरं न इति अहं जानामि । रूपधरवत् बलशाली अत्र नास्ति । अहं तं बाल्ये स्वयं दृष्टवान् आसम् । तस्य बलं कियत् आसीत् इत्यपि अहं स्पष्टं जानामि'' इति ।

अत्रान्तरे धीरमतिः आवेशं प्राप्य अग्रे गत्वा - ''अहो, मम मातुः विवाहस्य समयः आसन्नः अस्ति । एतत् दृश्यं पश्यन् अहम् उन्मत्तः इव जातः अस्मि । मम माता यादृशी अस्ति तादृशी स्त्री लोके अन्या नास्ति । किन्तु किं मम कथनेन ? एतत् धनुः अहम् अपि पश्यामि तावत् । अत्र ज्याम् आरोपयितुं ममापि सामर्थ्यं स्यात् कदाचित्'' इति वदन् धनुर्दण्डं हस्तेन गृहीतवान् । अत्रान्तरे रूपधरः नेत्रसङ्केतेन तं ततः निवारितवान् ।

पितुः आशयं जानन् धीरमतिः - ''हुँ, एतद्विषये अहं सर्वथा बालः एव । बालः अहम् अत्र किं वा साधयितुं शक्नुयाम् ? दिग्गजाः सन्ति एव अत्र । ते एव अत्र आगत्य स्वपराक्रमं प्रदर्शयन्तु नाम । कः पराक्रमशाली इति वयं जानीयाम'' इति उक्तवान् । - (अनुवर्तते)



# र स वा र्ताः

## उत्तरध्रुवप्रदेशे भारतपताका

भारतीयवैमानिकदलीयः क्वाड्रन्लीडर् सञ्जयथापर्वर्यः एप्रिल्मासस्य २१ दिनाङ्के उत्तरध्रुवप्रदेशं प्राप्तवान् । प्राप्तिवार्ता तु सामान्या एव । किन्तु सः येन क्रमेण प्राप्तवान् स च क्रमः अपूर्वः आसीत् । सः १०,००० पादपरिमितात् औन्नत्यात् उत्प्लुत्य (तन्नाम 'स्कै-डैविङ्ग'क्रमेण), पतनसमये एव योग्यस्य स्थलस्य अभिज्ञानार्थं द्विवारम् आकाशलुण्ठनं कृत्वा प्रतिपलं १७५ पादवेगेन भूमिं प्राप्तवान् । अन्ते ३०० पादौन्नत्यात् प्याराचूट्साहाय्यं स्वीकृतवान् आसीत् सः । हेलिकाप्टर्तः भूमिं प्राप्तुं तेन षण्णिमेषात्मकः कालः स्वीकृतः । एवं ध्रुवप्रदेशं प्राप्य सः ऐदम्प्राथम्येन ध्रुवप्रदेशे भारतस्य पताकाम् उड्डायितवान् । यदा सः हेलिकाप्टर्तः उत्प्लवनं कृतवान् तदा भूमेः तापमानं २६ सेल्सियस्परिमितम् आसीत् । ध्रुवप्रदेशस्य तापमानं तावत् - ५६ सेल्सियस्मितम् आसीत् । अस्मद्देशे अत्यधिकवारं स्कै डैयिङ्ग कृतवान् सञ्जयथापर् एव । एतस्य अपरं वैशिष्ट्यम् एतत् अस्ति यत् रशियादेशस्य 'पारारेस्क्यू सेण्टर्'नामिकया संस्थया आयोजितायां साहसयात्रायां भागं गृहीतवान् आसीत् सः ।

## साक्षरतायाः प्रचारार्थम्

मध्यप्रदेशस्य माण्डोर्मण्डले स्थितः द्वाविंशति-वर्षीयः रामप्रकाशबाल्डेमहोदयः दशमकक्ष्यापर्यन्तं पठितवान् । बाल्यतः पादविहीनः सः अग्रे पठितुं न शक्तवान् । परन्तु इदानीं सः एकेन एव पादेन मोटर्बैकयानेन समग्रं भारतम् अटितवान् । साक्षरताप्रचारः करणीयः इत्येव एतस्य प्रयाणस्य उद्देशः । जुलैमासे मध्यप्रदेशतः प्रस्थितः रामप्रकाशः ३२ राज्येषु, केन्द्रशासितप्रदेशेषु च सञ्चारं कृत्वा स्वातन्त्र्यदिने राजधानीं देहलीं प्राप्तवान् । विकलाङ्गः सन् द्विचक्रवाहनेन बहुदूरं प्रयाणं कृतवान् इति कारणतः स्वनाम 'गिन्निस् बुक् आफ् रेकार्ड्स्'पुस्तके पञ्जीकृतं भवेत् इति तस्य आशयः । रोटरी क्लब्, लयन्स् क्लब् इत्यादयः अन्ताराष्ट्रियसंस्थाः अपि तस्य प्रोत्साहनम् अकुर्वन् ।

## एमिलीकथा

अमेरिकादेशस्य मांसविक्रयिकः कश्चित् एमिली-नामिकां पञ्चवर्षीयां धेनुम् आनीय गोष्ठे बद्धवान् । गोष्ठं परितः पञ्चपादपरिमिता वृतिः अस्ति इति कारणतः एमिली कुत्रापि न गच्छेत् इति स्वामी चिन्तितवान् आसीत् । परन्तु एकस्मिन् दिने धेनुः अदृश्या जाता । तादृशी महती धेनुः पञ्चपादपरिमितां वृतिं कथम् अतिक्रम्य गता इति आश्चर्यम् अनुभवन् मांसविक्रयिकः तस्याः अन्वेषणम् आरब्धवान् । मासा चूसेट्स् बोस्टन् समीपे वने एमिली लब्धा । बोष्टन्समीपस्थे हम्पलिण्ट्न्समीपस्थे प्रदेशे स्थितौ मेराण्डा, लूयिस् राण्डा च धेनोः अन्वेषणे साहाय्यं कृतवन्तौ । तौ दम्पती तु शाकाहारिणौ । अश्वः, अजः, शुनकः, शशः इत्यादिनां प्राणिनां संरक्षणार्थं 'पीस् अबे फार्म' चालयन्तौ स्तः तौ दम्पती । तयोः प्राणिप्रीतिं दृष्ट्वा सन्तुष्टः विक्रयिकः केवलम् एकं डालर् स्वीकृत्य ताभ्यां दम्पतिभ्याम् एव एमिलीं दत्तवान् । ''शाकाहारस्य प्रचारार्थं प्राणिनः कथं वर्धनीयाः इति बालान् पाठयितुम् एव एमिलीधेनोः उपयोगः क्रियते'' इति तौ दम्पती उक्तवन्तौ । एमिलीकथाम् आधारीकृत्य अचिरात् एव चलनचित्रं निर्मितं भविष्यति इति श्रूयते ।

## जलस्पर्शम् अपि न सहते एषा



अतिविचित्रा वार्ता एषा अस्ति यत् जर्मनीदेशस्य अष्टवर्षीया हैडीपाल्क्नरनामिका बालिका जलपानसमये, स्नानसमये च महत् कष्टम् अनुभवति इति । जलस्पर्शम् एव तस्याः शरीरं न सहते इति श्रूयते ।




# प्रतिवेशिनः अहितम्

स्वीकृतं कार्यं समापनीयम् इत्येव सङ्कल्पं कृतवान् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षस्य शाखायां स्थितं शवं स्कन्धे स्थापितवान् । यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः - ''राजन् ! अगोचर-शक्तिषु विश्वस्य यत्किञ्चित् महत्कार्यं साधयितुम् उद्युक्तः सन् भवान् कष्टम् अनुभवन् अस्ति इति मम भाति । यदि तत् सत्यं तर्हि भवतः हितार्थम् अहं भवन्तं किञ्चित् वक्तुम् इच्छामि । लोके सर्वे विषयाः केनचित् नियमेन बद्धाः भवन्ति । अतः एव येषाम् ऋषीणां, मुनीनां, संन्यासिनां तपःशक्तिः अस्ति ते अपि कदाचित् आत्मना साधितानां शक्तीनां विषये अवमानम् अनुभवन्ति । तादृशजनानां विषये जागरूकता आवश्यकी । एतस्य उदाहरणत्वेन

## वेतालकथा



अद्भुतशक्तिमान् अपि यः सामान्यजनस्य कारणतः अवमानम् अनुभूतवान् तादृशस्य संन्यासिनः कथां श्रावयामि । श्रद्धया श्रृणोतु तावत्'' इति अवदत् ।

अनन्तरं वेतालेन कथा आरब्धा -

कस्मिंश्चित् ग्रामे वीरभद्रः नाम कश्चित् गृहात् बहिः उपविश्य पुराणं पठन् आसीत् । तदा कश्चित् संन्यासी आगत्य - 'भिक्षां देहि' इति उक्तवान् ।

तत् श्रुत्वा वीरभद्रः - 'भवते भिक्षा दीयते चेत् मम कः लाभः ?'' इति पृष्टवान् ।

''यदि भवान् मह्यं भिक्षां ददाति तर्हि भवता पुण्यं लभ्यते । तेन पुण्येन भवान् आजीवनं सुखेन जीवितुं शक्नोति । मरणानन्तरम् अपि भवान् स्वर्गं गन्तुं शक्तः भविष्यति'' इति उक्तवान् संन्यासी ।

तदा वीरभद्रः - ''पुण्यसम्पादनार्थं पुराणं पठितुं शक्यते । एतत् तु व्ययं विना भवति । परन्तु भवते आहारः दीयते चेत् तत्र व्ययः भवति । अतः अहं यत् प्रार्थयामि तत् भवान् ददाति चेत् भवते पूर्णोदरं भोजनं ददामि'' इति उक्तवान् ।

''भवान् यत्किमपि प्रार्थयतु । तत् दास्यामि अहम्'' इति उक्तवान् संन्यासी ।

''मम गृहस्य पुरतः स्थिते गृहे देवशर्मा नाम कश्चित् पण्डितः अस्ति । सः दुःखं यथा अनुभवेत् तथा कञ्चित् वरं मह्यं ददातु । मम सुखं यथा भवेत् तथा अपरेण वरेण माम् अनुगृह्णातु च'' इति उक्तवान् वीरभद्रः ।

तदा संन्यासी उक्तवान् - ''भवते एकम् एव वरं दातुं शक्नोमि अहम् । तदपि भवतः सुखार्थं दातुं शक्यते, न तु अपरस्य कष्टार्थम् । मया दत्तस्य वरस्य कारणतः कदापि अन्यस्य कष्टं न भवेत् इति मम अपेक्षा'' इति ।

तत् श्रुत्वा वीरभद्रः - ''गच्छतु भवान् । वृथा मम समयव्ययं किमर्थं कारयति ?'' इति संन्यासिनम् उक्तवान् कोपेन ।

संन्यासी ततः अग्रे गतवान् । तावता वीरभद्रस्य पत्नी बहिः आगत्य - ''अहो ! संन्यासिनः वरं भवान् किमर्थं निराकृतवान् ? तम् एव वरं देवशर्मा स्वीकृत्य प्रयोजनं प्राप्नुयात्'' इति उक्तवती ।

तदा वीरभद्रः हसन् - ''मूर्खे ! यस्य वरं दातुं शक्तिः भवति सः एवं वीथ्यां न

अटति । उदरनिमित्तम् एवं वेषं धृतवान् अस्ति सः'' इति पत्नीम् उक्तवान् ।

''तथा चेत् भवान् संन्यासिना सह किमर्थं तावत् सम्भाषणं कृतवान् ? किमर्थं वा वरं प्रार्थितवान् ?'' इति पृष्टवती पत्नी ।

''भोजनदानस्य आशां तस्मिन् जनयित्वा, पूरयितुम् असाध्याम् अपेक्षां सम्प्रार्थ्य तं प्रेषयितुम् अहम् इष्टवान् । अतः तथा कृतवान्'' इति वीरभद्रः उच्चैः हसन् उक्तवान् ।

तत् श्रुत्वा तस्य पत्नी कुतूहलेन वीरभद्रं पश्यन्ती - ''यदि सः भवतः अपेक्षानुगुणं वरद्वयम् अपि दद्यात् तर्हि भवान् किं कुर्यात् ?'' इति पृष्टवती ।

''एषः संन्यासी शक्तिमान् तु न । एवं स्थिते किम् असम्भाव्यस्य चिन्तनेन'' इति उक्तवान् वीरभद्रः ।

मन्दं गच्छता संन्यासिना वीरभद्रस्य वचनं श्रुतम् । सः देवशर्मणः गृहस्य पुरतः स्थित्वा - 'भिक्षां देहि' इति उक्तवान् ।

अनुक्षणम् एव द्वारम् उद्घाट्य आगतः देवशर्मा संन्यासिनं दृष्ट्वा - ''अहो ! अद्य स्वर्गस्थस्य मय पितामस्य जन्मदिनम् अस्ति । यावत् सः जीवितवान् तावत् अतिथिसेवां कुर्वन् एव आसीत् । तादृशस्य जन्मदिने सत्पुरुषाय भोजनदानम् अस्माकं कर्तव्यम् अस्ति । भवादृशम् आनेतुम् एव अहं प्रस्थितवान् आसम् । तावता एव भवान् आगतवान् । अन्तः आगच्छतु भवान्'' इति उक्त्वा आदरेण तम् अन्तः नीतवान् ।




तत्र सः संन्यासिनः पादौ प्रक्षाल्य मुखप्रक्षालनार्थं जलं दत्तवान् । देवशर्मणः पत्नी तस्य उपवेशनार्थं पीठं स्थापयित्वा स्वादिष्टं भोजनं परिवेषितवती । संन्यासिनः भोजनसमाप्तिपर्यन्तम् अपि देवशर्मणः सहोदरी चामरेण वीजितवती ।

सन्तोषेण भोजनं कृत्वा संन्यासी देवशर्माणम् उक्तवान् - ''अतिथिसत्कारः भवतां परिवारे सुष्ठु भवति । एतस्मात् अहं सन्तुष्टः अस्मि । भवान् यत् प्रार्थयति तत् अहं दास्यामि'' इति ।

तदा देवशर्मा विनयेन संन्यासिनं नमस्कृत्य - ''स्वामिन् ! मम सन्तोषार्थम् एव अतिथिसत्कारः मया क्रियते । भवत्तः फलापेक्षा क्रियते चेत् मम गृहं भोजनशाला भवेत् । भवतः सन्तोषः एव मम सन्तोषः ।



तत् विना अन्यत् किमपि न इच्छामि'' इति उक्तवान् ।

देवशर्मणः एताद्दशवचनैः इतोऽपि सन्तुष्टः संन्यासी - ''अहं भवतः अतिथिः अस्मि । 'अतिथिदेवो भव' इत्येव उक्तिः अस्ति । अतः भगवता वरः दीयते चेत् तस्य निराकरणम् उचितं न । तथा क्रियते चेत् अतिथेः अवमाननं कृतं भवति'' इति उक्तवान् ।

तदा देवशर्मा परिवारजनैः सह चर्चां कृत्वा किमपि निश्चित्य संन्यासिनम् उक्तवान् - ''स्वामिन् ! वर्षात् पूर्वं मम पिता दिवङ्गतः । तदा आरभ्य मम माता मनोरोगिणी अस्ति । केनापि औषधेन सा स्वस्था न अभवत् । एतत् दुःखम् अस्मान् सर्वान् सदा बाधते । तस्याः मनोव्याधिं निवार्य सा पुनः यथापूर्वं हसन्ती यथा भवेत् तथा करोतु भवान्'' इति ।

एतत् श्रुत्वा संन्यासिनः मुखं गम्भीरं जातम् । सः क्षणकालस्य मौनस्य अनन्तरं - ''वत्स ! भवान् अतीव सज्जनः अस्ति । भवतः सज्जनस्वभावः भवतः शापाय भवेत् । अतः भवान् ताद्दशस्वभावं त्यजति चेत् भवतः माता स्वस्था भवेत् । भवतः मातुः निमित्तं भवान् किमपि कर्तुं सिद्धः अस्ति वा ?'' इति देवशर्माणं पृष्टवान् ।

''स्वामिन् ! भवतः वचनस्य आशयः एव मया न ज्ञायते किल'' इति उक्तवान् देवशर्मा ।

तदा संन्यासी वीरभद्रस्य वृत्तान्तं देवशर्माणम् उक्त्वा - ''वस्तुतः मम समीपे काचित् गुलिका अस्ति एव । तां गुलिकां मुखे स्थापयित्वा स्वसन्तोषार्थम्, अपरस्य दुःखार्थं च यः वरद्वयं प्रार्थयति सः अनुक्षणम् एव फलं प्राप्नोति । यदि सः एकम् एव वरं प्रार्थयति तर्हि एकस्य अपि फलं न लभ्यते । अन्यच्च विपरीतपरिणामः अपि भवेत् । भवते अहं तां गुलिकां ददामि । भवतः माता स्वस्था भूत्वा भवतां सन्तोषं जनयिष्यति । वीरभद्रस्य यथा दुःखं भवेत् तथा अन्यं वरं प्रार्थयतु । 'भवतः दुःखं करणीयम्' इति तस्य मनसि दुर्भावना अस्ति । अतः भवान् एव तस्मिन् दुःखं जनयति चेत् तत् दोषाय न भवति'' इति उक्तवान् ।

एतस्मात् आश्चर्यचकितः देवशर्मा - ''स्वामिन् ! वीरभद्रस्य आतिथ्यं स्वीकृत्य भवान् एताद्दशीं गुलिकां तस्मै किमर्थं न

दत्तवान् ? एतस्याः प्रभावेण वरद्वयं सम्प्रार्थ्य सः सन्तुष्टः जातः स्यात् । अन्येषां दुःखकरणम् अहं न इच्छामि । मम माता एवम् एव अस्वस्था स्थास्यति चेदपि मम चिन्ता नास्ति । भवतः गुलिकां तु अहं न इच्छामि'' इति उक्तवान् ।

तस्य वचनं संन्यासी निराकुर्वन् - ''एतां गुलिकां वीरभद्रः प्राप्तुम् अनर्हः अस्ति । अतः एव अहं तस्य गृहस्य आतिथ्यं न स्वीकृतवान् । गुलिकां स्वीकर्तुं भवतः अर्हता अस्ति इति कारणतः एव भवते गुलिकां ददामि । भवान् यदि एतां गुलिकां तिरस्करोति तर्हि अतिथिसत्कारनियमः भवता उल्लङ्घितः भवति । वीरभद्रसदृशः भवतः गृहस्य पुरतः यावत् भवति तावत् भवतः अहितं निश्चितम् । अतः एतस्याः गुलिकायाः उपयोगं करोतु भवान्'' इति उक्त्वा देवशर्मणे गुलिकां दत्त्वा ततः गतवान् ।

देवशर्मा गुलिकां मुखे स्थापयित्वा - ''मम माता यथापूर्वं स्वस्था भवेत् । मम गृहं वृन्दावनं भवेत्'' इति वरं प्रार्थितवान् ।

तत् श्रुत्वा देवशर्मणः परिवारसदस्याः सर्वे दिग्भ्रान्ताः सन्तः - ''अहो ! वरद्वयेन अपि अस्माकं हितम् एव भवेत् । तस्मात् कीदृशम् अनिष्टं सम्भवेत् इति न ज्ञायते'' इति उक्तवन्तः ।

तावति काले तत्र आगता वृद्धा - ''किं वत्स ! सर्वे अत्रैव सन्ति । अहं तु अतीव बुभुक्षिता अस्मि ! मम भोजनव्यवस्थां भवन्तः कुर्वन्ति उत न'' इति पृष्टवती ।

पूर्णतया स्वस्थां मातरं दृष्ट्वा सन्तुष्टः



देवशर्मा - ''अम्ब ! भवती यथापूर्वं स्वस्था अभवत् । एतस्मात् मम सन्तोषः अभवत्'' इति वदन् - ''मातुः भोजन-व्यवस्थां करोतु भवती'' इति पत्नीं सूचितवान् ।

भोजनव्यवस्थां कर्तुं निर्गता तस्य पत्नी महता आश्चर्येण उक्तवती - ''किमिदम् ? गृहं पूर्णतया परिवृत्तम् अस्ति ! पाकशाला कुत्र अस्ति इत्येव न ज्ञायते मया'' इति ।

तदा सर्वे वृन्दावनरूपेण परिवृत्तं स्वगृहं दृष्ट्वा 'बहिस्तात् एतत् कथं दृश्येत' इति द्रष्टुम् इच्छन्तः कुतूहलेन बहिः आगतवन्तः ।

एतत् सर्वं दृष्ट्वा प्रतिवेशी वीरभद्रः देवशर्मणः भाग्यं ज्ञात्वा असूयां प्राप्य स्वस्य दौर्भाग्यं स्मरन् उद्गतानि अश्रूणि

राङ्कवेण मार्जयन् उपविष्टवान् ।

एवं वेतालः कथाम् उक्त्वा - ''भोः राजन् ! संन्यासी तु अतीव शक्तिशाली इत्यत्र सन्देहः एव नास्ति । परन्तु स्वशक्तिविषये तस्य अपि भ्रमः अस्ति इति भासते मम । 'मया दीयमानया गुलिकया वरद्वयं लभ्यते । एकं वरं स्वसन्तोष-निमित्तम्, अपरं वरम् अन्यस्य दुःखनिमित्तं च प्रार्थयतु' इति देवशर्माणम् उक्तवान् आसीत् सः । अन्यच्च 'द्वयमपि वरं स्वसन्तोषनिमित्तं प्रार्थ्यते चेत् अनिष्टं भवति' इत्यपि जागरितवान् आसीत् सः । तथापि देवशर्मा वरद्वयम् अपि स्वसन्तोषनिमित्तम् एव प्रार्थितवान् । तस्मात् किमपि अनिष्टं तु न जातम् । वरद्वयस्य अपि फलं प्राप्तं देवशर्मणा । एतस्मात् स्पष्टतया ज्ञायते यत् संन्यासिनः शक्तिः अपरिपूर्णा इति । देवशर्मा अपि संन्यासिनः वचनं किमर्थं न पालितवान् ? संन्यासिनः विषये तस्य अपि विश्वासः न आसीत् इति भावयितुं शक्यते किम् ? एतादृशसन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति अवदत् ।

तदा त्रिविक्रमः - ''प्रवृत्तस्य सर्वस्य परिशीलनेन ज्ञायते यत् संन्यासी, देवशर्मा चापि अधर्मं न कृतवन्तौ इति । स्वस्मै भिक्षाम् अदत्तवान् वीरभद्रः यदा उपहासं कृतवान् तदा कोपेन शापं दातुम् अशक्ष्यत् संन्यासी । परन्तु सः तथा न कृतवान् । तादृशः धर्मात्मा अन्येषां द्वारा वीरभद्रस्य अहितं करोति इति चिन्तनम् अपि अनुचितं भवेत् । परन्तु 'मया दीयमानेन एकेन वरेण स्वहितम्, अपरेण वरेण अन्यस्य दुःखं च भवति' इति यत् संन्यासी देवशर्माणम् उक्तवान् तत् देवशर्मणः धर्मबुद्धिं परिक्षितुम् एव आसीत् । एतत् ज्ञात्वा एव देवशर्मा कञ्चित् निर्णयं स्वीकृत्य स्वहितार्थं वरद्वयम् अपि उपयुक्तवान् । तस्मात् फलं प्राप्तवान् च । एतस्मात् 'स्वशक्तिविषये संन्यासिनः भ्रमः न आसीत्' इति तु स्पष्टं भवति'' इति उक्तवान् ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा पूर्ववत् शाखाम् अवलम्बितवान् ।





# मूर्खबुद्धिः

आत्मानं बुद्धिमतीं मन्यते स्म कान्ता । अतः एव सा स्वस्य स्नुषां लक्ष्मीं बहुधा पीडयति स्म । यदा लक्ष्मीः सुन्दरीं शाटिकां धरति स्म तदा कान्ता स्नुषां वदति स्म - ''भवती तु सुन्दरी एव अस्ति । पुनः सुन्दरीं शाटिकां धरति चेत् सर्वे भवतीम् एव पश्येयुः । कुदृष्टिः भवतीं बाधेत । अतः भवती सुन्दरीं शाटिकां मा धरतु'' इति ।

लक्ष्मीः इष्टं पाकं करोति चेत् कान्ता तां वदति स्म - ''भवती अनुत्तमं सर्वं मा खादतु । भवत्याः आरोग्यं नष्टं चेत् मया खलु उपचारादिकं चिन्तनीयम् ?'' इति ।

अथ कदाचित् दैवभक्ता लक्ष्मीः किञ्चित् व्रतं कर्तुम् इष्टवती । परन्तु तदपि सोढुम् अशक्ता कान्ता - ''भवती व्रतं किमपि मा आचरतु । निर्मलभक्त्या भगवतः स्मरणम् एव उत्तमः मार्गः । आहारं विना ध्याने एव महर्षयः मग्नाः आसन् इति कारणतः एव ते महात्मानः अभवन्'' इति उक्तवती ।

प्रतिवचनं किमपि दातुम् अशक्ता लक्ष्मीः मौनम् आश्रितवती । तत्काले तस्याः मनसि एवं विचारः आगतः - ''भक्त्या देवस्य आराधनार्थं व्रतादिकम् एव आचरणीयम् इति नास्ति । निर्मलमनसा सः परमेश्वरः मया स्मरणीयः । सा एव श्रेष्ठा पूजा'' इति । एवं निश्चित्य सा पूजाम् आरब्धवती ।

केषाञ्चित् दिनानाम् अनन्तरं वृद्धा कान्ता दिवङ्गता । यमदूताः तां प्रथमं स्वर्गं नीतवन्तः । आत्मानं बुद्धिमतीं भावितवती कान्ता - 'यमदूताः स्वर्गं नयन्तः सन्ति' इति कारणतः अतीव सन्तुष्टा । परन्तु यमदूताः तां क्षणं यावत् स्वर्गे स्थापितवन्तः । सा स्वर्गं पूर्णतया द्रष्टुम् अपि न शक्तवती । तावति काले एव यमदूताः तां यमपाशेन

'सुभद्रा'

बद्ध्वा नरकं नीत्वा यमधर्मराजस्य पुरतः स्थापितवन्तः ।

एतस्मात् कुपिता कान्ता - "किम् एतत् ? भवतः दूताः आदौ मां स्वर्गं नीत्वा क्षणाभ्यन्तरे एव ततः अत्र नरकम् आनीतवन्तः । तैः किमर्थम् एवं कृतम् ?" इति यमधर्मराजं पृष्टवती ।

तदा यमधर्मराजः शान्तस्वरेण उक्तवान् - "जीवने सम्पादितस्य अल्पस्य पुण्यस्य कारणतः भवती क्षणं यावत् स्वर्गे स्थातुं शक्तवती । परन्तु पापकार्येभ्यः मुक्तिः प्राप्तव्या चेत् भवत्या शतं वर्षाणि यावत् नरके भवितव्यम् एव" इति ।

तस्य वचनं श्रुत्वा कान्ता उक्तवती - "एषः कीदृशः न्यायः ? अहं तु यत्किमपि दुष्कार्यं न कृतवती । स्नुषाम् अपि कदापि अहं न तर्जितवती" इति ।

तदा यमधर्मराजः हसन् - "भवत्या उक्तं सत्यम् एव अस्ति । भवती कदापि कठोरशब्दैः स्नुषां न तर्जितवती । परन्तु मृदुव्यवहारकाले भवत्याः अन्तरङ्गं कोपासूयादिभिः ग्रस्तं तु भवति स्म एव । कायेन, वचसा, मनसा च यत् कार्यं क्रियते तत्र मनसः प्रथमं स्थानम् अस्ति । भवत्याः तु मनश्शुद्धिः एव नास्ति । मनसि कल्मषं स्थापयित्वा आत्मीयतया व्यवहारः क्रियते चेत् ततः किमपि प्रयोजनं न भवति । अतः दार्शनिकाः वदन्ति - 'भक्त्या विना मन्दिरप्रदक्षिणा क्रियते चेत् किं फलम्' इति । भवत्याः कारणतः एव भवदीया स्नुषा व्रतं कर्तुम् अपि न शक्तवती । भवती तु क्रोधं मनसि स्थापयित्वा निश्चलमनसा ध्यानं करोतु इति ताम् बोधितवती । मुग्धा सा तु तथा एव ध्यानं कृत्वा पुण्यं सम्पादितवती" इति उक्तवान् ।

"भवतः वचनं सत्यम् एव अस्ति । मया एते विषयाः न ज्ञाताः आसन्" इति खेदेन उक्तवती कान्ता ।

"भवादृशाः मूर्खाः अहङ्कारिणः च एतादृशविषयान् न अवलोकन्ते । तथापि भवत्याः स्नुषायाः पुण्यसम्पादने भवती परोक्षतया कारणम् । अतः एव भवती स्वर्गे क्षणं यावत् भवितुं शक्ता । इहलोके, परलोके उभयत्रापि स्थानं प्राप्तुम् अनर्हा भवती । तादृशी मूर्खबुद्धिः भवत्याः" इति कान्ताम् उक्तवान् यमधर्मराजः ।



# समुद्रतीरप्रयाणम् - १२

# तिरुवनन्तपुरमार्गे...

**रचना - मीरा नायर् ◆ चित्राणि - गौतमसेनः**




समुद्रं प्रति आगच्छन्त्यः पेरियार्प्रभृतयः नद्यः तैलसदृशद्रव्यमिश्रितं पङ्कम् आनीय समुद्रे पातयन्ति । यदा ऋतुपवनानाम् आरम्भः भवति तदा एषः पङ्कः जले विलीनः सन् सर्वत्र प्रसरति । समुद्रतीरप्रदेशे पङ्कतलं निर्मितं भवति च । एतत् पङ्कतलं चण्डमारुतकाले अपि तीरप्रदेशे जलाघातः यथा न भवेत् तथा रक्षणं ददाति ।

एतत् पङ्कतलं यत्र भवति तत्र नौकास्थगनं क्षेमकरम् इति जानन्तः अरब्वणिजः प्राचीने काले एतत् तीरं प्रति बहुधा आगच्छन्ति स्म ।

अलप्पुळा-कोल्लं-मध्ये ८५ कि.मी. अन्तरम् अस्ति । एतस्मिन् तीरे दृश्यमानाः सुन्दराः जलाशयाः, तेषु कमलानि, डयमानाः जलपक्षिणः च आह्लादं जनयन्ति । एतत्तीरे स्थिते अम्बलप्पुळाप्रदेशे श्रीकृष्ण-मन्दिरम् अस्ति । अत्र प्रसादरूपेण यत् तण्डुलपायसं दीयते तत् तु सुप्रसिद्धम् अस्ति ।



ओट्टं तुळ्ळकल्

'ओट्टं तुळ्ळक्ल्'नामिका कला अत्रैव आरब्धा । पूर्वम् अत्र 'चेक्कियर्कोत्तु'-नामिका नाट्यकला प्रचलति स्म । पुराणसम्बद्धानि, जानपदानि, सामाजिकानि च गीतानि अवलम्ब्य चेक्कियार्कुलीयाः विशिष्टां नाट्यकलां प्रदर्शयन्ति स्म । तादृशस्य कस्यचित् नाट्यवृन्दस्य निमित्तं कुञ्जन्नम्बियार्-नामकः कविः 'मिळावु'वाद्यं (ताम्रघटाकारेण स्थितं वाद्यं) वादयन् आसीत् । एकदा नम्बियारः नाट्यसमये तत् वाद्यं वादयन् एव अनवधानतया निद्रावशं गतः । तदा कुपितः वृन्दनायकः तं सम्यक् तर्जितवान् । एतस्मात् नितराम् अपमानितः नम्बियारः चक्कियार्कुल-वृन्दस्य प्रतिस्पर्धितया नूतनानि नाट्य-रूपाणि संयोज्य 'ओट्टं तुळ्ळकल्'नामिकां नाट्यकलाम् आरब्धवान् इति काचित् कथा श्रूयते ।



*अम्बलप्पुळास्थं कृष्णमन्दिरं यत्र 'ओट्टं तुळ्ळल्' ऐदम्प्रायम्येन प्रदर्शितम् आसीत् ।*



*कुञ्चन्नम्बियारेण वादितं 'मिळावु'वाद्यम्*

नम्बियारेण ऐदम्प्राथम्येन यत्र ओट्टं तुळ्ळल् प्रदर्शितं तस्य आलयस्य प्राङ्गणस्य मण्डपे तेन उपयुक्तं मिळावुवाद्यं गते जून्मासे प्रतिष्ठापितम् अस्ति ।

आलप्पुळाप्रदेशस्य दक्षिणदिशि 'कायङ्कुळं' नाम तीरनगरम् अस्ति । केरलस्य 'राबिन्हुड्' इत्येव प्रसिद्धिं गतं 'कायङ्कुळं' कोच्चुण्णिकुण्ठाकस्य जन्मस्थानम् अस्ति । निर्धनानां साहाय्यार्थं सः धनिकेभ्यः धनम् अपहरति स्म । १७ शतके कुण्ठाकेन उपयुक्तानि कानिचन आयुधानि तस्मिन् कारागारे इतोऽपि सन्ति, यस्मिन् च सः स्थापितः आसीत् ।

इतिहासप्रसिद्धं कोल्लम्नगरम् 'अष्टमुडी'नदीतीरे अस्ति । पूर्वम् एतत् 'क्विलाव्' नाम्ना आहूयते स्म । मलबारतीरे स्थितेषु अतिप्राचीननौकास्थानेषु एतत् अपि अन्यतमम् । विभिन्नदेशभ्यः वणिजां नौकाः अत्र आगच्छन्ति स्म । एतस्मिन् प्रदेशे यत् मरीचं लभ्यते स्म तत् प्रमुखम् आकर्षणम् आसीत् । संस्कृते कोलशब्दस्य 'मरीचम्' इत्यपि अर्थः अस्ति । अतः एव एतस्य नगरस्य नाम 'कोल्लम्' इति जातम् इति जनाः वदन्ति ।

१३ शतके चैनदेशीयाः मलबारतीरे कोल्लंनगरं प्रधानवाणिज्यकेन्द्रं कृतवन्तः आसन् । तस्मिन् काले स्वतन्त्रस्य कोल्लंसंस्थानस्य चैनदेशेन सह राजदूतसम्बन्धः अपि आसीत् । कोल्लंमण्डले एव पवित्रं 'शास्तामुट्टा'तडागः अस्ति । केरले प्रमुखः तडागः एषः एव । एतस्य तडागस्य समीपे स्थितं 'शास्तृ'मन्दिरं श्रीरामः एव निर्मितवान् इति भक्ताः वदन्ति ।

आलप्पुळामण्डलस्य समुद्रतीराणि रजतरेखाः इव श्वेतानि सन्ति । परन्तु अत्रत्य-सिकतासु इल्मनैट् बाक्सैट्नाम् खनिजवस्तु अपि अस्ति इति कारणतः एते



*दूरतीरीयान् वणिजः आकर्षकं मरीचम्*

तीरप्रदेशाः किञ्चित् कृष्णवर्णीयाः भवन्ति । इतः २० कि.मी. दूरे दक्षिणदिशि 'अञ्जेङ्गो'नामकं (अञ्जु-तेङ्गु) तीरपत्तनम् अस्ति । इंग्लेण्ड्देशीया ईष्टइण्डियासंस्था प्रथमवारं मलबारतीरे अत्रैव स्ववाणिज्यकेन्द्रम् आरभत । अत्र आगतैः ब्रिटीषजनैः निर्मितं दुर्गम् अत्र इतोऽपि अस्ति ।

अञ्जेङ्गोसमीपे एव 'वर्कला'नगरम् अस्ति, यच्च आरोग्यकेन्द्रं, यात्रास्थलं, विश्रान्तिभूमिः च अस्ति । अत्रत्यसमुद्रतः उद्भूतेभ्यः रक्तवर्णीयपर्वतेभ्यः जलस्य उत्सः आगच्छति ।



श्री नारायणगुरुः

प्रख्यातमतसंस्थापकः श्रीनारायणगुरुः वर्कलस्थले स्थितस्य शिवगिरिपर्वतस्य उपरि एव स्वस्य अन्तिमदिनानि यापितवान् आसीत् । श्रीनारायणगुरुः 'एकम् एव कुलम्, एकम् एव मतम्, एकः एव देवः' इति तत्त्वे कायेन, वाचा, मनसा च विश्वस्य तस्य प्रचारं कृतवान् । कुलमतानाम् अन्तरम् अपरिगणय्य मानवाः समन्वयेन प्रगतिपथं गच्छेयुः इति सः बोधितवान् ।

जनार्दनमन्दिरे श्रीकृष्णं 'वर्कलप्पन्'नाम्ना पूजयन्ति । एतत् हिन्दूनां यात्रास्थलम् अस्ति । वर्कलतः ४८ कि.मी. दूरे दक्षिणदिशि केरलस्य राजधानी तिरुवनन्तपुरम् अस्ति । तिरुवनन्तपुरशब्दस्य 'सहस्रफणानाम् आदिशेषस्य निलयः' इत्यर्थः । नगरस्य समुद्रपार्श्वे लघुपर्वते पद्मनाभस्वामिदेवालयः अस्ति । एतत् मन्दिरं नगरस्य प्रमुखभूषणायते । एतत् पद्मतीर्थपुष्करिण्याः अभिमुखम् अस्ति ।

यदा तिरुवनन्कूरुराजः मार्तण्डवर्मा तिरुवनन्तपुरं स्वराजधानीं कृतवान् आसीत् तदा स्वराज्यं

अञ्जेङ्गोदुर्गम्





*तिरुवनन्तपुरस्य श्रीअनन्तपद्मनाभस्वामिदेवालयः*

श्रीमहाविष्णवे अर्पितवान् आसीत् । तिरुवन्कूरुराजकुमाराः 'अनन्तपद्मनाभस्वामिदासाः वयम्' इति कथने गर्वं वहन्ति स्म । इदानीं तत्र ये देवालयाः दृश्यन्ते ते सर्वे १८ शतके निर्मिताः ।

१०० गजानां साहय्येन ४,००० भवननिर्मापकाः ६,००० कर्मकराः च सम्भूय षण्मासावधौ महता कष्टेन एतम् आलयं निर्मितवन्तः इति श्रूयते । मन्दिरे आदिशेषरूपायां शय्यायां महाविष्णुः शयानः अस्ति । दीर्घचतस्राकारे आलयमण्डपे चतसृषु दिक्षु ४,००० स्तम्भाः सन्ति । प्रतिस्तम्भं हस्तद्वयेन दीपान् गृहीतवतीनां स्त्रीणां चित्राणि सन्ति । सायं मन्दिरे यदा दीपान् ज्वालयन्ति तदा स्त्रीरूपाणि उज्जीवितानि इव शोभन्ते । सोपानानि आरुह्य सप्ताट्टात्मकगोपुरशिखरसमीपं गन्तुं शक्यते ।

अस्माकं देशस्य द्वितीया प्राचीना जन्तुप्रदर्शनशाला तिरुवनन्तपुरे अस्ति । (कलकत्ता-जन्तुप्रदर्शनशाला अत्यन्तं प्राचीना अस्ति ।)

श्रीचित्र अर्ट्ग्यालरिमध्ये राजपुत्राणां मोगल्चक्रवर्तिनां च लघुलघुचित्राणि सन्ति । केरलराज्ये उत्पन्नस्य सुप्रसिद्धचित्रकारस्य रविवर्मणः चित्राणि अपि अत्र सन्ति । टिबेट्-चैना-जपान्-बालीशैलीनां चित्राणि अपि अत्र सन्ति ।

१९७२तमे वर्षे तिरुवनन्तपुरे विक्रमसाराभाय् अन्तरिक्षकेन्द्रं स्थापितम् । अस्माकं देशे साटिलैट्लाञ्छ वेहिकल्स् अभिवृद्धिनिमित्तम् आवश्यकं साङ्केतिकज्ञानम् उपकरणानि च एतेन केन्द्रण दीयन्ते ।

नगरतः १७ कि.मी. दूरे दक्षिणदिशि अर्धचन्द्राकारकं कोवलंसमुद्रतीरम् अस्ति । अस्माकं देशे स्थितेषु अत्यन्तसुन्दरसमुद्रतीरेषु एतत् अपि अन्यतमम् । महाशिलाः समुद्रतरङ्गेभ्यः एतत् तीरं रक्षन्ति ।

'रामकथापाट्टु' नामकस्य काव्यस्य रचयिता सुप्रसिद्धकविः 'अय्यापिळ्ळ असाम्' कोवलंप्रदेशे एव जन्मं प्राप्तवान् । केरल-तमिळुनाडुसीमायां पूर्वरुनगरम् अस्ति । ९७० कि.मी. उन्नते 'अगस्त्यकूट'पर्वते प्रवहन्ती नेय्यर्नदी अत्रैव अरेबियासमुद्रेण सङ्गता भवति ।




# अजेयस्य विवाहः

चन्द्रपुरराज्यस्य महाराजः धर्मसेनः अन्वर्थनामधेयः आसीत् । सः धर्ममूर्तिः, महावीरः च आसीत् । सत्यशीलः, जनानुरागी चापि आसीत् । दत्तं वचनं कदापि न विस्मरति स्म सः । तस्य शासनकाले सर्वे जनाः निश्चिन्ततया जीवनं यापयन्तः आसन् ।

हिमगिरिः चन्द्रपुरराज्यस्य प्रतिवेशि-राज्यम् । उभयोः राज्ययोः मध्ये बहोः कालात् वैरम् आसीत् । धर्मसेनः द्वयोर्मध्ये वैरम् अनिच्छन् मैत्रीं सम्पादयितुम् उद्युक्तः आसीत् । परन्तु मूर्खः हिमगिरिराज्यस्य महाराजः विक्रमसेनः शत्रुत्वमेव इष्टवान्, तत् अनुवर्तितवान् च । धर्मसेनः विक्रमसेनं जेतुं सामर्थ्यवान् चेदपि तदर्थं प्रयत्नं न कृतवान् आसीत् । परन्तु विक्रमसेनः चन्द्रपुरराज्यं वशीकर्तुं कुतन्त्रं रचयन् आसीत् ।

गच्छता कालेन विक्रमसेनः स्वसैन्यस्य सङ्ख्यां वर्धितवान् । अनिरीक्षिततया धर्मसेनस्य राज्यस्य उपरि युद्धं घोषितवान् च । धर्मसेनः अपि पराक्रमी एव । सः अपि आत्मनः पराक्रमं दर्शयितुं सिद्धः अभवत् । द्वयोः सैन्ययोः मध्येः युद्धम् आरब्धम् । धर्मसेनः विक्रमसेनः च रणरङ्गे परस्परम् अभिमुखं स्थित्वा युद्धम् आरब्धवन्तौ । परन्तु प्रथमदिने केनापि विजयं साधयितुं न शक्तम् । सूर्यास्तसमये तौ स्वस्थानं प्रतिगतवन्तौ ।

अपरस्मिन् दिने युद्धकरणसमये शत्रूणाम् आयुधेन धर्मसेनः व्रणितः अभवत् । सः युद्धरङ्गात् स्वस्थानं गतवान् । वैद्यः तस्य चिकित्सां कृतवान् ।

सञ्जातां परिस्थितिं दृष्ट्वा धर्मसेनः भीतः जातः । किं करणीयम् इति यावत् सः चिन्तयन् आसीत् तावता सेनापतिः तत्र

'भामहः'



आगत्य - ''महाराज ! भवतः चिन्ता मास्तु । अहं मम सर्वशक्तिम् उपयुज्य विक्रमसेनं जेष्यामि'' इति उक्तवान् ।

सः सेनापतिः राजभक्तः धैर्यवान् च । परन्तु युद्धतन्त्रम् विशेषतः न जानाति स्म । एतत्सर्वं धर्मसेनः जानाति स्म । तथापि अनिवार्यपरिस्थितौ अन्या गतिः नास्ति इति कारणतः ''तथैव भवतु'' इति सः अङ्गीकृतवान् ।

रात्रौ चन्द्रपुरसैन्यस्य कश्चित् सैनिकः धर्मसेनस्य समीपम् आगत्य - ''महाप्रभो ! मम नाम अजेयः । इदमिदानीं भवतः सैन्यं प्रविष्टवान् अस्मि । भवान् व्रणितः इति अहं ज्ञातवान् । अस्यां परिस्थितौ भवान् विक्रमसेनेन सह युद्धं कर्तुं न शक्नोति । एतम् अवकाशं मह्यं ददातु । कथञ्चित् अहं तं मारयिष्यामि'' इति उक्तवान् ।

कश्चित् सैनिकः आगत्य ''विक्रमसेनं सम्मुखीकरोमि'' इति धैर्येण उक्तवान् यत् तत् श्रुतवतः धर्मसेनस्य मनसि आश्चर्यभावः उत्पन्नः । एतत् दृष्ट्वा अजेयः उक्तवान् - ''प्रभो ! बाल्यात् मम पितामह्याः कथां श्रुतवतः मम मनसि काचित् महती अपेक्षा उत्पन्ना अस्ति । ताम् अपेक्षां पूरयितुम् अहम् अहर्निशं प्रयत्नं कृतवान् अस्मि । 'मम पराक्रमं प्रदर्श्य सा अपेक्षा पूरणीया' इति उद्देशेन एव भवतः सैन्यं प्रविष्टवान् अस्मि'' इति ।

''बहु उत्तमम् । परन्तु भवतः अपेक्षा का इति अहं ज्ञातुं शक्नोमि वा ?'' इति पृष्टवान् धर्मसेनः ।

तदा अजेयः उक्तवान् - ''प्रभो ! मम अपेक्षां विक्रमसेनस्य मारणानन्तरमेव अहं प्रकटीकरिष्यामि । परन्तु भवता वचनं दातव्यम् यत् 'भवतः अपेक्षां पूर्णं करिष्यामि' इति'' इति ।

धर्मसेनः क्षणकालं यावत् मौनं स्थित्वा - ''अजेय ! भवान् निश्चयेन विक्रमसेनं जेष्यति इत्यस्ति चेत् भवतः अपेक्षां पूरयिष्यामि इति अहं धर्मदेवतायाः साक्षितया प्रतिज्ञां करोमि'' इत्युक्त्वा सेनापतिम् आहूय प्रवृत्तं सर्वं विवृतवान् ।

अपरस्मिन् दिने रणरङ्गे अजेयः विक्रमसेनस्य सैनिकान् मारयित्वा विक्रमसेनस्य पुरतः आगतवान् । तदा विक्रमसेनः अजेयं जेतुं सर्वशक्तिम् उपयुज्य युद्धं कृतवान् । परन्तु विफलः जातः सः युद्धभूमितः पलायितुं प्रयत्नं कृतवान् । तदा

अजेयः विक्रमसेनस्य शिरः एव कर्तितवान् । महाराजस्य मरणं दृष्ट्वा सर्वे अपि सैनिकाः नितरां भीताः सन्तः रणरङ्गतः पलायनं कृतवन्तः ।

अजेयस्य विजयं दृष्ट्वा धर्मसेनः आनन्देन अजेयम् आलिङ्गितवान् । तस्य अभिनन्दनं कुर्वन् - "अस्मिन् सन्तोषसमये भवान् स्वस्य अपेक्षां वदतु । दत्तं वचनं परिपालयन् अहं भवतः अपेक्षां पूरयामि" इति उक्तवान् ।

"प्रभो ! राजकुमार्या प्रियंवदया सह मम विवाहं करोतु" इति विनयेन उक्तवान् अजेयः ।

अजेयस्य अपेक्षां श्रुत्वा धर्मसेनः चिन्ताक्रान्तः अभवत् । महाराजस्य एकमात्रपुत्री प्रियंवदा । सा शरच्चन्द्रिका-राज्यस्य वसन्तसेनाय दातव्या इति राज्ञा निश्चितम् आसीत् । परन्तु एतं विषयं प्रजाः न जानन्ति स्म । निश्चितं विवाहं स्थगयितुम् अपि न शक्यते स्म । दत्तं वचनम् तिरस्कर्तुम् अपि न शक्यते स्म । परिस्थितिः एवं विलक्षणा अस्ति चेदपि महाराजः धर्मसेनः मनोवेदनां किञ्चिदपि अप्रदर्शयन् अजेयम् अन्तःपुरं नीत्वा सत्कृतवान् ।

तद्दिने रात्रौ धर्मसेनः प्रियंवदायाः पुरतः सर्वं विषयं विवृत्य - "यदि भवतीम् अजेयाय दास्यामि तर्हि अहं वसन्तसेनविषये वचनभ्रष्टताम् आचरितवान् भविष्यामि । वसन्तसेनाय भवतीं दास्यामि चेत् अजेयस्य विषये वचनभ्रष्टता आचरिता भविष्यति" इति उक्तवान् ।

प्रियंवदा बुद्धिमती । राज्यपरिपालन-विषये सा आत्मनः अभिप्रायं सूचयति स्म । सा पितरं धैर्यवचनानि वदन्ती - "तात ! कस्यापि अप्रीतिः यथा न स्यात् तथा अहम्



एतां समस्यां परिहरिष्यामि । भवतः वचनभ्रष्टता न भविष्यति एव'' इति अभयं दत्तवती ।

अपरस्मिन् दिने प्रातःकाले प्रियंवदा सखीं वीणां वस्त्राभरणादिभिः सम्यक् अलङ्कृत्य 'किं करणीयम्' इति तां संसूच्य अजेयस्य मन्दिरं नीतवती । राजकुमार्याः वेषभूषादिभिः विराजमानां वीणां दृष्ट्वा अजेयः चिन्तितवान् यत् एषा एव राजकुमारी इति ।

वीणा तम् उद्दिश्य - ''भवान् राजकुमारीं परिणेतुम् इच्छति इति महाराजः उक्तवान् अस्ति । एतत् वचनं सत्यं वा ?'' इति पृष्टवती ।

तस्याः प्रश्नं श्रुत्वा अजेयः आनन्देन - ''सत्यम् । एतत् सत्यम् अस्ति । अहम् एतावत्पर्यन्तं राजकुमारीं न दृष्टवान् । मम बाल्ये पितामही यथा राजकुमारीं वर्णितवती तथैव अस्ति भवती । क्षत्रियेतरः अहं बहूनि युद्धतन्त्राणि ज्ञात्वा, इदानीं राजकुमारीपरिणयभाग्यं प्राप्तवान् अस्मि यत् तस्य मूलकारणं मम पितामही एव'' इति वदन् अग्रे आगन्तुम् उद्युक्तः अभवत् ।

तदा वीणा मन्दहासेन अनुरागेण च अजेयं पश्यन्ती - ''महावीरस्य भवतः पत्नी भवितुं सिद्धा अहम् आत्मानं धन्यं मन्ये । शीघ्रमेव आवयोः विवाहः भविष्यति'' इति उक्त्वा ततः निर्गतवती ।

प्रवृत्तं सर्वं प्रियंवदायाः मुखात् ज्ञातवान् धर्मसेनः - ''पुत्रि ! अस्माकं राज्यं शत्रुभ्यः रक्षितवान् अस्ति अजेयः । तादृशाय वञ्चनामार्गेण वीणां दत्त्वा विवाहं निर्वर्तयामि चेत् अहं वचनभ्रष्टः न भवेयं वा ?'' इति पृष्टवान् ।

''तात ! अत्र वचनभ्रष्टतायाः प्रसक्तिः एव नास्ति । सः महावीरः यां कामपि एकां राजकुमारीं परिणेतुम् इच्छति । भवान् वीणां दत्तकरूपेण स्वीकरोतु । तदा सा अपि भवतः पुत्रीसमाना भवति । तादृशी अजेयाय दीयते चेत् न किमपि अनौचित्यम् । अत्र भवतः वचनभ्रष्टता अपि न भविष्यति'' इति उक्तवती प्रियंवदा ।

तदनन्तरं धर्मसेनः वीणां दत्तकरूपेण स्वीकृत्य मासाभ्यन्तरे एव अजेय-वीणयोः विवाहं वैभवेन निर्वर्तितवान् ।





# सुवर्णसमयः -६

## यन्त्रमानवगणना

अङ्गारकदेशे क्रि.श. २००१

अयि, भूलोकवासिनः ! यन्त्रमानवाः अत्र अन्तरिक्षे कार्यानानि सज्जीकुर्वन्तः सन्ति ।

५४ यन्त्रमानवाः प्रतिदिनं ५४ कार्यानानि निर्मान्ति ।

एकैकः 'अल्फा'यन्त्रमानवः दिने कार्यानद्वयं निर्मातुं समर्थः ।

'बिटा'यन्त्रमानवौ उभौ मिलित्वा दिने त्रीणि कार्यानानि निर्मातुं समर्थौ ।

त्रयः 'गामा'यन्त्रमानवाः सम्भूय दिने एकं कार्यानं निर्मान्ति ।

एवं तर्हि किं भवन्तः वक्तुं शक्नुवन्ति यत् अत्र कति अल्फानामकाः कति बीटानामकाः कति गामानामकाः च सन्ति इति ?



# सुवर्ण-सामयिकस्य प्रश्नावली



१ 'रोबोट्' इत्येतस्मात् जेक्पदात् 'रोबोट्'पदम् उत्पन्नम् अस्ति । एतस्य पदस्य अर्थः 'दासवृत्तिः' इति 'कठिनकार्यम्' इति वा । एतं 'रोबोट्'पदं कः ग्रन्थकारः ऐदम्प्राथम्येन परिचायितवान् ?

२ एषु दिनेषु केषुचित् देशेषु 'माग्लोवट्रेन्स्' नामकानि रैल्यानानि प्रतिघण्टं ५०० कि.मी.वेगेन सञ्चरन्ति दृश्यन्ते । सामान्यरैल्यानानां सञ्चारार्थं यत् प्राधान्येन आवश्यकं तदेव न आवश्यकं तेषां कृते । अनावश्यकं तत् किम् ?



३ वर्णमयदूरदर्शनस्य जवनिकायां वर्णमयम् इन्द्रधनुः निर्मातुं तत् यन्त्रं त्रीन् एव वर्णान् उपयुङ्क्ते । ते त्रयः वर्णाः के ?





४ तडित् विद्युन्मयी भवति इत्येतं विषयं निरूपयितुं कश्चन विज्ञानी राजकीयनेता प्राणापायम् अपि अविगणय्य परिशोधनं कृतवान् । १७५२तमे वर्षे सः तडित्प्रसारक्षेत्रे वाताटं सम्प्रेष्य तदीयं सूत्रं वैद्युतान्वेषकयन्त्रे योजितवान् आसीत् । सः विज्ञानी कः ?




५ चतुर्षु वर्षेषु एकवारं लीप्वर्षं प्राप्यते । यत् वर्षं चतुर्थसङ्ख्यया निश्शेषं विभाजनं प्राप्नोति तदेव वर्षं 'लीप्वर्षं' नाम । किन्तु शततमसङ्ख्यया यानि निश्शेषं विभाजनं प्राप्नुवन्ति तानि लीप्वर्षाणि न । एवं तर्हि २००० तमवर्षं लीप्वर्षम् उत न ?



६ 'प्लिम् सोल् लेन्' इत्येतत् नौकासम्बद्धम् अस्ति । तत् कुत्र अस्ति ?

७ मेरी षेल्ली स्वस्य 'फ्राङ्कन्स्टीन्'नामके कथा-पुस्तके भीकरमानवसृष्ट्यर्थं मानवायवाः कथं संयोजनीयाः इति वर्णितवती अस्ति । सः 'फ्राङ्कन्स्टीन्' कः ?

# चित्रयन्तु भवन्तः - यन्त्रमानवम्

यन्त्रमानवः कथं निर्मातव्यः इति जिज्ञासा वा भवताम् ? नलिकाकृतेः अवलम्बनेन यन्त्रमानवः सुलभतया निर्मातुं शक्यः । क्रमाः अधः निर्दिष्टाः सन्ति -



१. आदौ सरलरेखाभिः अस्थिपञ्जरं निर्मान्तु भवन्तः ।



२. अस्थिपञ्जरे मांसखण्डाः योजनीयाः । उरः, उदरं, पादौ, हस्तौ च नलिकाकृतिभिः रचयन्तु । शिरोभागे गोलाकृतिं लिखन्तु ।



३. अस्थिपञ्जर-निर्माणार्थं कृतां रेखां मार्जयन्तु । यत्र यत्र सन्धयः दृश्यन्ते तत्र सन्धिरेखाः लिखन्तु ।



४. इदानीं चित्रस्य अन्तिमरूपं कल्पयन्तु । अत्र क्लेशः नास्ति खलु ?



५. यन्त्रमानवस्थाने यदि भवन्तः 'कौबाय्'चित्रम् इच्छन्ति तर्हि द्वितीयघट्टस्य चित्रस्य समीपं गत्वा तत्र कौबाय्मानववेषं लिखन्तु । तस्य मुखे हासस्य चित्रणं तु मा विस्मरन्तु । यतः हासः एव मानवकल्पनां प्रतिबिम्बयति ।



# महाभारतम्

''शिवस्य दर्शनं करोतु'' इति सूचनां दत्त्वा इन्द्रः ततः यदा अदृश्यः अभवत्, तदा अर्जुनः 'शिवस्य आराधनां करिष्यामि' इति निर्णीय ततः अग्रे गतवान् । सः एकं सुमनोहरं वनं दृष्टवान् । तस्मिन् वने वातावरणम् अपि बहु सम्यक् आसीत् । शिवम् उद्दिश्य तपः कर्तुम् एतदेव अत्युत्तमं स्थानम् इति अर्जुनः निर्णीतवान् ।

ततः अर्जुनः जटां धृत्वा वल्कल-वस्त्रधारी सन् चतुर्मासपर्यन्तं तपः कृतवान् । अर्जुनात् अग्निः जन्म प्राप्य वनं सर्वं दग्धुम् उद्युक्तः अभवत् । तत् दृष्ट्वा तस्मिन् वने वसन्तः ऋषिमुनयः सर्वे शिवं दृष्ट्वा - ''अर्जुनस्य अपेक्षां सम्पूर्य तस्य तपसः समाप्तिं करोतु कृपया'' इति प्रार्थितवन्तः ।

तदा शिवः तान् उद्दिश्य - ''अर्जुनस्य अपेक्षाम् अहं पूरयिष्यामि । अतः अलं भयेन'' इति उक्तवान् ।

मुनीनां गमनानन्तरं शिवः किरातवेषं धृतवान् । पार्वती अपि किरातवेषं धृतवती । तस्य गणीयाः अपि योग्यवेषं धृतवन्तः । सर्वे मिलित्वा, अर्जुनः यस्मिन् वने तपः कुर्वन् आसीत् तस्मिन् एव वने भ्रमणम् आरब्धवन्तः ।

तदा 'मूकः' इति कश्चन राक्षसः वराहस्य रूपं धृत्वा, अर्जुनं मारयितुम् सन्नद्धः अभवत् । तपसः भङ्गतः कुपितः अर्जुनः धनुः स्वीकृत्य तं वराहं मारयितुं प्रयत्नं कृतवान् ।

तावति काले किरातवेषधारी शिवः अर्जुनम् उद्दिश्य - ''भोः ! अहं तं वराहं मारयामि । भवान् तस्मिन् बाणप्रयोगं मा करोतु'' इति उक्तवान् ।

अर्जुनः किरातस्य वचने आदरम् अप्रदर्शयन् तं वराहम् उद्दिश्य बाणं

निर्जनप्रदेशे अस्मिन् वने भवान् किमर्थम् अस्ति ? भवान् सुकुमारः नागरिकः इव दृश्यते । वराहे अहम् एव आदौ बाणं प्रयुक्तवान् । मम बाणप्रहारेण व्रणिते तस्मिन् भवान् अपि बाणं प्रयुक्तवान् । किम् एतेन बलप्रदर्शनेन ? अहङ्कारेण मां निन्दति अपि खलु भवान् ? भवान् शक्तिमान् चेत् मया सह युद्धं करोतु तावत्'' इति वदन् अर्जुनस्य कोपं वर्धितवान् ।

अर्जुनः कोपेन किरातस्य उपरि बाणप्रयोगं कृतवान् । परन्तु किरातः तान् तृणाय मन्यमानः - ''एते बाणाः वा ? इतोऽपि उत्तमाः बाणाः किं भवत्सकाशे न सन्ति ? इतोऽपि समर्थतया युद्धं कर्तुं किं भवान् न शक्नोति ?'' इति उपहासपूर्वकं पृष्टवान् ।



प्रयुक्तवान् । किरातः अपि वराहम् उद्दिश्य बाणं प्रयुक्तवान् । उभयोः अपि बाणयोः प्रहारं प्राप्य नितरां व्रणितः वराहः स्वराक्षसरूपं धृत्वा अधः पतितवान्, तत्रैव प्राणान् त्यक्तवान् च ।

तदा अर्जुनः किरातम् उद्दिश्य - ''भवान् कः ? अस्मिन् निर्जनप्रदेशे भवान् स्त्रिया सह किमर्थम् अटन् अस्ति ? मां मारयितुम् उद्युक्तस्य राक्षसस्य मारणसमये भवान् किमर्थं बाणं प्रयुक्तवान् ? कः एषः व्यवहारः भवतः ? एषः व्याधस्य धर्मः न'' इति उक्तवान् ।

किरातवेषधारी शिवः तस्य कथनं श्रुत्वा हसन् - ''मम कुलगोत्रादिकं भवते किमर्थम् आवश्यकम् ? मया अत्र किं क्रियते इत्यत्र भवतः जिज्ञासा किमर्थम् ?

अमोघानि अस्त्राणि अपि तृणीकृत्य युद्धं कुर्वन्तं किरातं दृष्टवतः अर्जुनस्य मनसि सन्देहः उत्पन्नः यत् एषः मायावेषधारी कश्चित् महापुरुषः एव स्यात् इति । 'एषः सामान्यः किरातः यदि स्यात् तर्हि एतावति काले पलायनं कृतवान् स्यात्' इति चिन्तयन् सः किरातम् अभिलक्ष्य बाणवृष्टिम् एव कृतवान् । निरन्तर-बाणप्रयोगात् अर्जुनस्य अक्षयतूणीरः अपि रिक्तः अभवत् ।

अग्निदेवस्य प्रसादतः प्राप्तः अक्षय-तूणीरः अपि यदा बाणरहितः जातः तदा अर्जुनस्य सन्देहः दृढः अभवत् । अन्ते सः गाण्डीवस्य तीक्ष्णभागेन किरातं मारयितुम् उद्युक्तः अभवत् । तत्क्षणे एव गाण्डीवम्

अपि अदृश्यं जातम् । अर्जुनः खड्गेन प्रहर्तुं प्रयत्नं कृतवान् । किन्तु खड्गः एव खण्डशः भग्नः अभवत् । एवम् अर्जुनः निरायुधः अभवत् । तथापि अक्षीणोत्साहः सः किरातम् उद्दिश्य वृक्षस्य शाखां, शिलाखण्डं च क्षिप्तवान् ।

अर्जुनस्य सर्वविधप्रयत्नेन अपि किरातः किञ्चिदपि विचलितः न जातः । अन्ते नितरां क्रुद्धः अर्जुनः किरातं मुष्ट्या ताडयितुम् उद्युक्तः अभवत् । किरातः अपि अर्जुनं ताडितवान् । किरातस्य ताडनेन अर्जुनः मूर्च्छितः अभवत् ।

अल्पे एव काले सचेतनतां गतः सः उत्थाय स्नानं कृत्वा, मृत्तिकया कृतस्य शिवलिङ्गस्य उपरि पुष्पमालां स्थापयित्वा किरातं दृष्टवान् । शिवलिङ्गस्य उपरि स्थापिता पुष्पमाला किरातस्य कण्ठे विराजते स्म । एतत् दृष्टवतः अर्जुनस्य आश्चर्यं सन्तोषः च अभवत् । एतावत्पर्यन्तं शिवेन सह एव अहं युद्धं कृतवान् आसम् इति ज्ञात्वा अर्जुनः शिवं साष्टाङ्गं नमस्कृत्य स्तोत्रम् आरब्धवान् ।

तदा शिवः - ''अर्जुन ! भवादृशः शूरः त्रिलोक्याम् अपि अन्यः नास्ति । भवतः भक्तिं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि । मम दिव्यास्त्रं भवते ददामि । तत् प्रयोक्तुं, प्रतिस्वीकर्तुं च भवान् एव अर्हः । अस्त्रस्य महिम्ना एव भवान् शत्रुं जेतुं शक्नोति'' इति उक्तवान् ।

अर्जुनः शिवं क्षमां याचितवान् । तदा शिवः अर्जुनं दृढम् आलिङ्ग्य - ''अर्जुन ! पूर्वजन्मनि भवान् नरः नाम कश्चित् मुनिः आसीत् । अनेकानि वर्षाणि यावत् भवान् नारायणः च बदरिकाश्रमे तपः कृतवन्तौ । भवन्तौ उभौ अपि मिलित्वा अनेकान् दुष्टान् मारयित्वा इन्द्रपदवीं रक्षितवन्तौ ।





अतः इदानीं भवान् यत् इच्छति तत् प्रार्थयतु । तत् अहं दास्यामि'' इति उक्तवान् ।

''महेश्वर ! भीष्मेण, द्रोणेन, कर्णेन, दुर्योधनेन च सह मया युद्धं करणीयं भवेत् । तान् महावीरान् जेतुं मह्यं पाशुपतास्त्रं, ब्रह्मास्त्रं च ददातु कृपया'' इति अर्जुनः शिवं प्रार्थितवान् ।

तदा शिवः अर्जुनं पाशुपतास्त्रस्य प्रयोगम् उपसंहारं च मन्त्रसहितं बोधितवान् । अर्जुनस्य गाण्डीवम् अक्षय-तूणीरं च प्रत्यर्प्य पार्वत्या सह ततः अदृश्यः अभवत् च ।

अपूर्वस्य पाशुपतास्त्रस्य प्राप्त्या अर्जुनः नितरां सन्तुष्टः आसीत् । 'शिवस्य दर्शनेन, स्पर्शेन च मम शरीरं पवित्रम् अभवत्' इति सः चिन्तितवान् ।

तावति काले लोकपालकाः इन्द्रः, यमः, वरुणः, कुबेरः च पत्नीभिः सह तत्र आगतवन्तः । तेषु एकैकः अपि अर्जुनाय एकैकम् अस्त्रं दत्तवान् । इन्द्रः अर्जुनं स्वर्गं प्रति आमन्त्र्य - ''तत्र भवते दिव्यास्त्राणि दास्यामि'' इति उक्तवान् ।

किञ्चित्समयानन्तरम् अर्जुनाय इन्द्रस्य रथः अपि आगतः । रथस्य सारथिः मातलिः - ''अर्जुन ! भवतः कृते इन्द्रः रथं प्रेषितवान् अस्ति । सः देवैः, गन्धर्वैः, अप्सरोभिः च सह सभायां तिष्ठन् भवतः आगमनस्य निरीक्षां कुर्वन् अस्ति'' इति उक्तवान् ।

'इन्द्रस्य रथस्य आरोहणं दूरे तिष्ठतु नाम । तस्य रथस्य स्पर्शं कर्तुं वा मम अर्हता स्यात् वा' इति अर्जुनः क्षणकालं चिन्तितवान् । अन्ते इन्द्रस्य आह्वानं स्मरन् सः रथम् आरूढवान् ।

रथः आकाशे डयमानः सिद्धमार्गस्य द्वारा गच्छन् आसीत् । मार्गे स्वयंप्रकाशिनः राजऋषयः, युद्धे मृताः शूराः, सिद्धाः, गन्धर्वाः, अप्सरासः च दृश्यन्ते स्म । मातलिः मार्गे दृष्टस्य एकैकस्य अपि जीवनचरित्रं विस्तरेण अर्जुनं वदति स्म ।

किञ्चित्कालाभ्यन्तरे अर्जुनः अमरा-वतीनगरं दृष्टवान् । नगरस्य बहिर्भागे द्वारस्य उपरि उन्नतं शिखरम् आसीत् । तत् दृष्टवतः अर्जुनस्य महान् सन्तोषः जातः । नगरस्य अन्तर्भागे नन्दनवने अप्सरसः विहरन्ति स्म ।

यदा रथः अमरावतीनगरं प्रविष्टः, तदा

सर्वे देवाः इन्द्रस्य आज्ञानुसारेण अर्जुनस्य स्वागतं कर्तुम् आगतवन्तः । गन्धर्वाः, सिद्धाः च अर्जुनस्य पुरतः आगत्य मङ्गलघोषं कृतवन्तः । नारदप्रभृतयः देवाः अर्जुनस्य आशीर्वादं कृतवन्तः । अर्जुनः सर्वान् मण्डपान् अतिक्रम्य, देवेन्द्रस्य सभां सुधर्मां प्रविष्टवान् ।



तत्र सभायां देवेन्द्रः सिंहासने विराजते स्म । तं परितः स्थिताः गन्धर्वाः तस्य स्तुतिं कुर्वन्तः आसन् । वेदघोषाः श्रूयन्ते स्म । तस्यां सभायां सिद्धाः, चारणाः, मरुतः, विश्वेदेवाः, आदित्याः, वसवः, रुद्राः, ब्रह्माणः, ऋषयः, राजर्षयः च आसन् । इन्द्रस्य शिरसः उपरि श्वेतच्छत्रम् आसीत् । तम् उभयतः स्थिताः देवाः चामरेण वीजयन्ति स्म ।

अर्जुनः इन्द्रस्य समीपं गत्वा प्रणामं कृतवान् । इन्द्रः तम् आलिङ्ग्य सिंहासने उपवेशितवान् । इन्द्रः स्वपुत्रम् अर्जुनं दृष्ट्वा अत्यन्तं सन्तोषम् अनुभूतवान् । नारदः वीणां वादितवान् । तुम्बुरुः गीतवान् । अप्सरसः नृत्यं कृतवत्यः ।

तदनन्तरं देवाः अर्जुनाय अर्घ्य-पाद्यादिकं दत्त्वा तं सुन्दरम् अतिथिगृहं नीतवन्तः । अर्जुनः स्वर्गे बहुकालं यावत् स्थित्वा देवास्त्राणां प्रयोगम्, उपसंहारं च सम्पूर्णतया ज्ञातवान् ।

एस्मिन् एव समये इन्द्रः चित्रसेनस्य द्वारा अर्जुनं नृत्यं सङ्गीतं च पाठितवान् । अर्जुनः स्वर्गे तिष्ठन् अपि वने विद्यमानानां भ्रातॄणां मातुः च स्मरणं पुनः पुनः प्राप्नुवन् मनसि एव दुःखम् अनुभवति स्म ।

अर्जुनस्य ऊर्वश्याम् अनुरागः अस्ति इति अन्यथा चिन्तितवान् इन्द्रः कदाचित् चित्रसेनम् आहूय - "चित्रसेन ! अर्जुनस्य अपेक्षा पूरणीया इति ऊर्वशीं वदतु" इति उक्तवान् ।

चित्रसेनः ऊर्वशीम् तथैव उक्तवान् । सा इन्द्रस्य आज्ञां पालयितुं पूर्णिमायां रात्रौ, अर्जुनेन यत्र वासः कृतः तम् अतिथिगृहं गतवती ।

सम्यक् अलङ्कारं कृत्वा रात्रौ अतिथिगृहम् आगतवतीम् ऊर्वशीं दृष्ट्वा अर्जुनः भीत्या - "देवि ! भवत्याः आगमनं किमर्थम् ? मत्तः किमपि साहाय्यम् आवश्यकं वा ?" इति पृच्छन् भक्त्या तां नमस्कृतवान् ।

तदा ऊर्वशी आगमनस्य उद्देशम्

उक्तवती । तत् श्रुत्वा अर्जुनः - ''नारायण, नारायण'' इति वदन् कर्णौ गृहीत्वा - ''अम्ब ! भवती मम मातृसमाना, शचीदेवीसमाना च अस्ति । अस्माकं मूलपुरुषस्य पुरूरवसः पत्नी भवती । अतः अहं भवतीं मातृसमानाम् एव पश्यामि सर्वदा अपि'' इति उक्तवन् ।

तदा ऊर्वशी - ''सुन्दराङ्ग ! अर्जुन ! अस्मिन् लोके अस्माकं पद्धतयः भिन्नाः । भूलोके भवताम् पद्धतयः एव भिन्नाः भवन्ति । अतः सन्देहं त्यक्त्वा मम अपेक्षां पूरयतु'' इति उक्तवती ।

अर्जुनः - ''अम्ब ! भवन्तः देवाः । भवन्तः किमपि कुर्वन्ति चेदपि तत् दोषत्वेन न परिगण्यते । परन्तु अहं मानवः । अतः भवद्भिः यथा क्रियते तथा कर्तुम् अहं न शक्नोमि । अन्यच्च भवती मम मातृसमाना अस्ति । मयि अन्यथाभावं परित्यज्य मां भवत्याः पुत्रम् इव परिगणयतु'' इति प्रार्थितवान् ।

आशाभङ्गः यदा अभवत् तदा ऊर्वश्याः कोपः आगतः । सा अर्जुनम् उद्दिश्य - ''अत्र शृणोतु । अहम् एका स्त्री । स्वेच्छया भवन्तम् इष्टवती । परन्तु भवान् मां तिरस्कृतवान् । अतः भवान् नपुंसकः भवतु इति शापं ददामि । भीरुः इव अन्तःपुरस्य स्त्रीभिः सह क्रीडया नाट्येन च कालयापनं कुर्वन् भवतु भवान्'' इति शप्त्वा ततः निर्गतवती ।

अर्जुनः रात्रिं कथञ्चित् यापयित्वा प्रातःकाले चित्रसेनस्य आगमनस्य अनुक्षणं रात्रौ प्रवृत्तं समग्रं निवेदितवान् ।

प्रवृत्तं सर्वं चित्रसेनस्य द्वारा श्रुत्वा इन्द्रः अर्जुनस्य समीपम् आगत्य - ''अर्जुन । भवान् एतावत्संयमशीलः इति न चिन्तितवान् आसम् । अलं गतस्य विषये चिन्तनेन । चजऊर्वश्याः शापात् भयं मास्तु । भवान् अग्रे एकवर्षं यावत् अज्ञातवासं करिष्यति खलु । तदा एतं शापम् अनुभवतु । तेन भवतः लाभः एव भविष्यति । तस्मात् भवतः शापविमोचनम् अपि भविष्यति'' इति उक्तवान् ।

इन्द्रस्य वचनेन अर्जुनस्य सन्तोषः अभवत् । सः चित्रसेनेन सह स्वर्गे विहरन् कालं यापितवान् ।

- (अनुवर्तते)



# गुलिकाः न सेवनाय ....

मीनाक्षी नाम काचित् धनिका आसीत् । तस्याः त्रयाणाम् अपि पुत्राणां विवाहः जातः । सा स्नुषाणां द्वारा एव सर्वाणि कार्यं कारयति स्म । गच्छता कालेन कर्मकारान् सर्वान् गृहात् प्रेषयित्वा सर्वाणि कार्याणि स्नुषाणां द्वारा एव कारयितुम् उद्युक्ता अभवत् मीनाक्षी । स्वयम् आसन्दे उपविश्य गीतानि गायन्ती भवति स्म सा ।

एतेन केषाञ्चित् दिनानाम् अनन्तरं सा स्थूला जाता । भोजनं क्रियते चेत् श्रान्तिं, न क्रियते चेत् नीरसतां च अनुभवति स्म सा । तदर्थं मीनाक्षी वैद्यानां समीपं गत्वा स्वसमस्यां निवेदितवती । केचन न्यूनं खादतु इति, केचन प्रतिदिनं प्रातः सायं च किञ्चिद्दूरं चलतु इति च उक्तवन्तः । तस्याः पतिः तु वाटिकायां कार्यं कुर्वन् स्नुषाणाम् अपि साहाय्यं कुर्वन् कालं यापयति स्म ।

परन्तु प्रतिदिनं दूरं चलितुं मीनाक्ष्याः इच्छा न आसीत् । पाककार्ये स्नुषाणां साहाय्यं क्रियते चेत् श्वश्र्वाः स्थानस्य अपमाननम् इति सा चिन्तयति स्म । अतः सा तत् कार्यद्वयम् अपि न कृतवती ।

एतादृशपरिस्थितौ – 'सुगन्धपुर्यां स्थितः कश्चित् वैद्यः स्थौल्यं निवारयति' इति वार्तां मीनाक्षी श्रुतवती । सा तस्य वैद्यस्य समीपं गत्वा सर्वं निवेदितवती । सः वैद्यः शतगुलिकायुक्ताम् एकां कूपीं तस्यै दत्त्वा शतं रूप्यकाणि स्वीकृतवान् ।

''स्वामिन् ! प्रतिदिनं कति गुलिकाः खादनीयाः ?'' इति वैद्यं पृष्टवती मीनाक्षी ।

तदा वैद्यः उक्तवान् – ''एताः गुलिकाः न खादनीयाः । भवती प्रतिदिनम् एताः गुलिकाः षड्वारम् अधः पातयतु । अनन्तरं कूपीम् उपरि आसन्दे स्थापयित्वा एकैकाम् अपि गुलिकां पुनः कूप्यां स्थापयतु'' इति ।



# जीवनवृक्षः

अस्माकं देशे आलयवृक्षः इति प्रसिद्धिं गतः चम्पकजातीयः एषः वृक्षः मेक्सिको-मूलः इति श्रूयते । मेक्सिकोमूलः एषः वृक्षः इदानीं प्रपञ्चे सर्वत्र दृश्यते । न केवलं हिन्दवः, अपि तु यवनाः, बौद्धाः च एतं वृक्षं पूजार्हं मन्यन्ते । देवालयेषु, यवनानां प्रार्थनास्थानेषु च एषः वृक्षः अधिकतया दृश्यते । यवनाः स्मारकसमीपे एतं वृक्षं वर्धयन्ति । अतः एतत् पुष्पं ''मृतानां पुष्पम्'' इत्यपि निर्दिश्यते क्वचित् ।

हिन्दीभाषया एतत् 'चमेल्' 'गुल्-इ-चिन्' इति, मराठीभाषया 'खैर्चम्पा' इति, गुजरातीभाषया 'धोलोचम्पा' इति, बङ्गालीभाषया 'दलमा-फूला' इति, ओरियाभाषया 'गोलोची' इति, तमिळुभाषया 'इळत्तळरि' इति, मलयाळभाषया 'अरळिवेळ्ळचम्पक' इति, तेलगुभाषया 'अर्वातगन्नेरु' इति च निर्दिश्यते ।

एषः वृक्षः षड्मीटर्परिमितोन्नतियुक्तः भवति । एतस्य शाखाः दृढाः चतसृषु दिक्षु प्रसृताः चापि भवन्ति । यदा पर्णानि न भवन्ति तदा तासाम् अग्रभागः स्थूलः दृश्यते । सामान्यतः ३० सें.मी. दीर्घाणि पर्णानि शाखानाम् अग्रभागे भवन्ति । मध्यप्रकाण्डतः आरब्धानां पर्णानां नलिकाः परस्परं समानाः भवन्ति । अन्ये वृक्षाः इव एते अपि वृक्षाः शैत्यकाले पर्णरहिताः भवन्ति ।

पुष्पदलानां वर्णः आदौ हरिद्रावर्णीयः, ततः श्वेतः, अन्ते रक्तः किञ्चित् पाटलः च भवति । एवं एतस्य वृक्षस्य पुष्पं विविधवर्णैः विराजते । एतानि पुष्पाणि सुगन्धयुक्तानि भवन्ति । फेब्रवरीमासतः अक्टोबर्मासपर्यन्तं वृक्षेषु पुष्पाणि विकसन्ति । समूलम् उन्मूलितः अपि एषः वृक्षः म्लानताम् अप्राप्नुवन् विकसति, पुष्प्यति च । अतः एव एषः वृक्षः 'जीवनवृक्षः' इत्यपि निर्दिश्यते ।



अस्मद्देशीयाः ऋषयः

# जाजलिः

सामान्यैः मनुष्यैः यस्मिन् अरण्ये वासः कर्तुं न शक्यते तादृशे अरण्ये जाजलिः नाम कश्चित् मुनिः तपः करोति स्म । सः विरागी जितेन्द्रियः च आसीत् । वृक्षस्य त्वक् एव तस्य वस्त्रम् आसीत् । शैत्यं, वृष्टिम्, आतपं च सोढ्वा सः घोरं तपः कृतवान् । अन्ते अन्नं जलं च त्यक्तवान् । सूर्यकिरणतः वायुतः च सः जीवशक्तिं प्राप्नोति स्म । ध्यानमग्नं तं झञ्झावातः अपि कम्पयितुं न शक्नोति स्म ।

एकदा जाजलिः ध्यानं समाप्य उत्थाय उदयमानं सूर्यम् एव पश्यन् आसीत् । तदा तेन मार्गेण आगतौ पक्षिणौ तस्य उपरि उपविष्टौ । पक्षिणोः कष्टं न भवेत् इति मत्वा जाजलिः तथा एव स्थितवान् । किञ्चित्समयानन्तरं तस्य जटाम् एव नीडं मत्वा पक्षिणी तस्मिन् अण्डं स्थापितवती । तदा अण्डम् अधः यथा न पतेत् तथा मुनिः विनाकम्पनं स्थितवान् ।

केषाञ्चित् दिनानाम् अनन्तरम् अण्डात् शावकाः बहिः आगत्य उड्डयनम् अपि ज्ञातवन्तः । पक्षिणी तेभ्यः आहारम् आनीय ददाति स्म । कदाचित् शावकाः पक्षिण्या सह कुत्रचित् गतवन्तः । सायं यदा ते प्रत्यागच्छन्ति तदा तेषां भ्रमः न भवेत् इति विचिन्त्य जाजलिः ततः न चलितवान् । परन्तु गताः पक्षिणः षड्दिनपर्यन्तम् अपि न प्रत्यागताः । जाजलिः तु तथा एव स्थितवान् आसीत् ।

परन्तु गताः पक्षिणः मासपर्यन्तम् अपि न आगताः । अतः ते अन्यत् स्थानं गताः स्युः इति चिन्तितवान् जाजलिः स्नानार्थं समुद्रं गतवान् । तत्र स्नानं कुर्वन् – 'अहो ! पक्षिणां निमित्तम् अहं महान्तं श्रमं निरूढवान् । अतः अहं महातपस्वी' इति चिन्तयन् अहङ्कारं प्राप्तवान् ।

''भवान् एव श्रेष्ठः चेत् वाराणस्याः वणिक् तुलाधरः कीदृशः स्यात् ?'' इति काचित् अशरीरवाणी तदा तेन श्रुता ।

तस्मात् चकितः जाजलिः वाराणसीं गत्वा तुलाधरेण मिलितः । परिवारं पोषयन्, बान्धवानां मित्राणां चापि साहाय्यं कुर्वन्, अहङ्कारं, दर्पं, क्रोधं च विना निराडम्बरतया तृप्त्या च जीवनं करोति स्म तुलाधरः । तस्य दर्शनात् जाजलेः मनसि स्थितः अहङ्कारः नष्टः । अनन्तरं तुलाधरेण सह चर्चां कृत्वा वेदान्तरहस्यं ज्ञातवान् जाजलिः । एवं जाजलिः अपि विनयशाली जातः ।



# भवन्तः जानन्ति वा ?

१. यवनानां पवित्रः ग्रन्थः कः ?
२. 'बुल् फैटिङ्ग्'क्रीडा कस्मिन् देशे प्रसिद्धा अस्ति ?
३. रोगिणः हृदयस्पन्दनं ज्ञातुम् उपयुज्यमानस्य साधनस्य नाम किम् ?
४. जलचराणां प्रदर्शनम् आङ्ग्लभाषया केन शब्देन निर्दिश्यते ?
५. अस्माकं देशे मतदानार्हतां कियद्वयस्केन प्राप्यते ?
६. नखाः कर्त्यन्ते चेत् वेदना किमर्थं न भवति ?
७. कस्मिन् देशे सुवर्णम् अधिकतया लभ्यते ?
८. प्रपञ्चे कस्मिन् देशे जनसंख्या अधिका अस्ति ?
९. केन वस्तुना दर्पणस्य निर्माणं क्रियते ?
१०. तत् शास्त्रं किं, यस्य च अङ्गतया भूतलं, वातावरणं, भूसारः, वृक्षाः, मानवाः इत्यादीन् अधिकृत्य अध्ययनं क्रियते ?
११. भूमेः ऊर्ध्वस्तरस्य अधः अनिरीक्षिततया जायमानं चलनं केन शब्देन निर्दिश्यते ?
१२. चन्द्रलोके ऐदम्प्राथम्येन पादार्पणं कौ कृतवन्तौ ?
१३. कस्य देशस्य प्रजाः 'किवीस्'नाम्ना आहूयन्ते ?
१४. पर्षियादेशस्य इदानीन्तनं नाम किम् ?
१५. शम्बूकः कियत्कालं निद्रां करोति ?

## उत्तराणि

१. खुरान् ।
२. स्पेयिन्देशे मेक्सिकोदेशे च।
३. 'स्टेथस्कोप्' इति ।
४. 'अक्केरियम्' इति पदेन ।
५. अष्टादशवर्षवयस्केन ।
६. यतः नखेषु रक्तनाड्यः न भवन्ति ।
७. दक्षिण-आफ्रिकादेशे ।
८. चीनादेशे ।
९. सिकताभिः ।
१०. भूगोलशास्त्रम् ।
११. 'भूकम्प'शब्देन ।
१२. नील् आर्मस्ट्राङ्ग्, एडिवन् आल्ड्रिन् च ।
१३. न्यूजिल्याण्ड्देशस्य ।
१४. इरान् ।
१५. त्रीणि वर्षाणि ।

# सुवर्णसमयप्रश्नावली (५) उत्तराणि



१. नेस्सी लाचनेस्-भीकरमृगः ।

२. टिबेट्जनाः तं 'येति' इति निर्दिशन्ति । पाश्चात्याः 'अतिदुष्टः हिममानवः' इति वदन्ति ।



३. बेर्मुडा ट्रयङ्गल् इति । दॉवल्स् ट्रयङ्गल् इत्यपि तस्य निर्देशः क्रियते ।

४. यतः तानि निस्साराणि भवन्ति । वस्तुतः पक्षिणां पुच्छस्य यावान् भारः ततोऽपि न्यूनः भारः भवति अस्थ्नाम् ।

५. सप्त एव ।

६. किङ्ककाङ्क इति ।

७. 'आस्ट्रिच्'-पक्षिणी । एतस्याः अण्डस्य सामान्यभारः भवति १.६ कि.ग्राम् ।





८. न कदापि तरणं स्थागयन्ति ते । यतः अन्यमीनानाम् इव एतेषां प्लवनसहायकौ पक्षौ न भवतः । अतः तरणं परित्यक्तं चेत् निमज्जनम् एव शरणम् । अतः ते निद्राकाले अपि तरन्तः एव भवन्ति ।

**वास्तविकः दोषः     अतिमहती मृगया**

पूर्वचरित्रयुगस्य मानवः राक्षसगोधिकां मारयितुं न अर्हति । यतः मानवोत्पत्तितः बहुपूर्वम् एव राक्षसगोधिकायाः सन्तानः विलयं गतः आसीत् ।





# पिशाच्या कारितः विवाहः

सुशीला रङ्गनाथस्य एकमात्रपुत्री । बाल्ये एव तदीया माता दिवङ्गता आसीत् । अतः पितरि अत्यधिका प्रीतिः आसीत् तस्याः । पिता रङ्गनाथः अपि पुत्रीं महता वात्सल्येन पश्यति स्म । यद्यपि तयोः नित्यजीवनं निश्चिन्तं निरातङ्कं च आसीत्, तथापि अल्पेन धनेन 'विवाहं कथं निर्वर्तयिष्यामि ?' इति महती चिन्ता आसीत् एव रङ्गनाथस्य ।

अथ कदाचित् प्रातःकाले रङ्गनाथः कार्यार्थं गच्छन् आसीत् । तस्मिन् समये एव गृहस्य स्वामी तम् आहूय - "पश्यतु । एतस्मात् मासात् गृहस्य भाटकरूपेण पञ्चविंशतिः रूप्यकाणि अधिकतया दातव्यानि भवता । अन्यथा एतत् गृहं परित्यक्तव्यम्" इति उक्तवान् ।

गृहस्वामिनः वचनं श्रुत्वा भीतं पितरं दृष्ट्वा तत्रैव स्थिता सुशीला - "एतत् तु जीर्णं गृहम् अस्ति । षण्मासेभ्यः पूर्वं गृहस्वामी भाटकम् अधिकीकृतवान् आसीत् । इदानीं पुनः किमर्थम् अधिकं दातव्यम् ?" इति कोपेन उक्तवती ।

तस्याः वचनात् कुपितः गृहस्वामी - "एतावत्सुन्दरं गृहं, भवती जीर्णं गृहम् इति वदति खलु ! भवतां कृते एतस्य मार्गस्य अन्ते विद्यमानं पिशाचगृहम् एव योग्यम् । किं चर्चया ? सायङ्कालात् पूर्वं सर्वाणि वस्तूनि इतः निष्कासनीयानि । अन्यथा सर्वाणि वस्तूनि बहिः क्षिपामि" इत्युक्त्वा गृहस्य अन्तः गतवान् ।

रङ्गनाथः निस्साहायकतया पुत्रीम् उद्दिश्य - "वत्से ! मम इदानीं समयः नास्ति । सायङ्काले पश्याम तावत् । तत्समये तस्य कोपः किञ्चित् न्यूनः भवेत्" इति उक्त्वा ततः निर्गतवान् ।

सुशीला अन्तः गत्वा पिशाचगृहस्य

विषये चिन्तनं कुर्वती उपविष्टवती । तस्य एव मार्गस्य अन्ते तत् पिशाचगृहम् आसीत् । गृहस्य स्वामिनी शारदा । जीवितकाले सा बहु उत्तमा आसीत् । सर्वे तां नमस्कुर्वन्ति स्म । 'अम्ब ! मम कष्टम् अस्ति' इति कोऽपि आगत्य यदि वदति तर्हि सा तं रिक्तहस्ततया कदापि न प्रतिप्रेषयति स्म । तादृशी शारदा मासत्रयात् पूर्वं केनचित् कारणेन मृतवती । तस्याः पतिः पूर्वमेव दिवङ्गतः आसीत् । तस्मिन् गृहे तस्याः पुत्रः एकः एव अवशिष्टः आसीत् ।

शारदायाः मरणस्य अनन्तरं तस्मिन् गृहे तस्याः पुत्रः जयदेवः, पाचकः, कर्मकराः च वसन्ति स्म । गच्छता कालेन सर्वे कर्मकराः 'शारदा पिशाची जाता अस्ति, सा रात्रौ गृहे अटन्ती भवति' इति वदन्तः कार्यं त्यक्त्वा गतवन्तः आसन् ।

एतत् सर्वं स्मृत्वा सुशीला - "करुणा दया च यत्र नास्ति, तत्र वासकरणेन किं प्रयोजनम् ? एतदपेक्षया धैर्येण पिशाचगृहे वासकरणम् एव वरम्" इति निश्चित्य ततः उत्थाय गृहस्य द्वारं कीलयित्वा बहिः प्रस्थितवती ।

सुशीला ततः साक्षात् शारदायाः गृहं गतवती । यदा सा गृहस्य समीपं गतवती, तावति काले एकः युवकः द्वारं कीलयन् आसीत् । 'एषः एव जयदेवः स्यात्' इति विचिन्त्य सा तं नमस्कृत्य स्वपरिचयम् उक्त्वा आत्मनः परिस्थितिं संक्षेपेण निवेद्य - "भवान् कानिचन दिनानि अत्र आश्रयं ददातु कृपया । पिशाचेभ्यः अस्माकं भीतिः तु नास्ति । यदि भवता आश्रयः दीयेत तर्हि भवदीयं साहाय्यम् आजीवनं स्मरिष्यामः" इति उक्तवती ।

जयदेवः तस्याः कथनं श्रुत्वा



प्रसन्नतया - ''भवन्तः अस्मिन् गृहे यावत् कालम् इच्छन्ति तावत् कालं तिष्ठन्तु । एतत् गृहं स्वगृहं भावयन्तु भवन्तः । 'एतत् गृहं पिशाचगृहं न, मम माता पिशाची न अभवत्' इति जनाः ज्ञातुं शक्ताः भवन्ति चेत् पर्याप्तम्'' इति उक्त्वा गृहस्य कुञ्चिकां तस्यै दत्त्वा - ''कार्यालयं गत्वा सायङ्काले आगमिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

तस्य गमनानन्तरम् सुशीला एकवारं गृहम् अवलोक्य, जलम् आनीय सर्वं स्वच्छीकृत्य द्वारं पिधाय पूर्वतनगृहम् आगतवती । परिचितस्य सोमनाथस्य भाटकशकटे सर्वाणि वस्तूनि आरोप्य शारदायाः गृहं प्रति आगतवती ।

तस्मिन् समये एव गृहम् आगतः रङ्गराजः पुत्र्याः कार्यं ज्ञातवान् । ततः सः शारदायाः गृहम् आगतवान् । द्वारम् उद्घाट्य सुशीला पितुः मुखे कोपं दृष्ट्वा - ''तात ! भवन्तम् अपृष्ट्वा गृहस्य परिवर्तनं कृतवती इति कोपं मा करोतु । गृहस्वामी किम् उक्तवान् अस्ति इति स्मरति खलु भवान् ? तावतः अपमानस्य अनन्तरम् अपि तत्र वासं कर्तुं कथं शक्येत ? भवान् पिशाचेभ्यः भयं न अनुभवतु । योग्यतानुगुणम् अन्यत् गृहं लब्धं चेत् एतत् गृहं त्यक्त्वा गच्छाम'' इति उक्तवती ।

रात्रौ जयदेवः पितापुत्रीभ्यां सह सन्तोषेण भोजनं कुर्वन् सुशीलया कृतं पाकं बहु इष्टवान् ।

प्रातः रङ्गनाथः कार्यार्थं गमनसमये - ''शीघ्रम् एव भाटकगृहस्य अन्वेषणं करोमि । रात्रिः भवति चेत् भीतिः मास्तु'' इति सुशीलाम् उक्त्वा गतवान् ।

तद्दिने सुशीला गृहं परितः विद्यमानं बिशालम् अङ्गणं स्वच्छीकुर्वती कालं





यापितवती । यदा रात्रिः अभवत् तदा अन्तः गत्वा पाकम् आरब्धवती सा । पाक-समाप्तितः पूर्वं - ''भवत्या सह सम्भाषणेन विना इतोऽपि अधिककालं स्थातुं मया न शक्यते'' इति कश्चित् ध्वनिः आगतः ।

सुशीला तं ध्वनिं श्रुत्वा परिवृत्य दृष्टवती । तत्रैव विद्यमाने पीठे काचित् पिशाची उपविष्टवती आसीत् । 'एषा शारदा एव स्यात्' इति मत्त्वा सुशीला हसन्ती - 'अम्ब ! अहम् अज्ञानेन पृच्छामि । जीवितकाले भवत्या बहूनां जनानां साहाय्यं कृतम् आसीत् । परन्तु भवती मरणानन्तरं कथं पिशाची अभवत् ? तस्य परिणामतः अस्मिन् विशाले गृहे भवत्याः पुत्रः एकः एव निवासं कुर्वन् अस्ति'' इति उक्तवती ।

तदा पिशाची खेदेन - ''जयदेवस्य विवाहः करणीयः इति मया चिन्तितम् आसीत् । परन्तु सः विवाहे अनासक्तिं प्रदर्शयन् - 'सा मास्तु', 'एषा मास्तु' इति वदन् कालं यापितवान् । तावति काले मम आयुः अपि समाप्तम् । तस्य विवाहः न अभवत् । तया इच्छया एव अहं मरणानन्तरं पिशाची अभवम् । वाटिकायां कूपस्य पार्श्वे स्थिते वृक्षे इदानीं मम वासः । प्रतिदिनम् अर्धरात्रे गृहस्य अन्तः गत्वा पुत्रं दृष्ट्वा तृप्त्या गच्छामि स्म । सर्वेषां कार्यम् अपि परिशीलयामि स्म । गच्छता कालेन कर्मकरेषु परिवर्तनं जातम् । अथ कदाचित् मम पुत्रः ज्वरपीडितः सन् मञ्चे शयनं कृतवान् आसीत् । तदा सर्वे कर्मकराः पाचकः च मिलित्वा रात्रौ धान्यं सर्वं चोरयितुम् उद्युक्ताः अभवन् । तस्मिन् क्षणे एव अहं तेषाम् उपरि आक्रमणं कृत्वा - 'वराकाः ! अहं भवतां स्वामिनी शारदा अस्मि । भवतः सर्वान् पुत्रवत् पालितवती आसम् । इदानीं कः एषः विश्वासद्रोहः भवताम् ? इतःपरम् एवं चौर्यं क्रियते चेत् प्राणैः वियोगः प्राप्तव्यः भवेत्' इति भायितवती । तदा सर्वे भीत्या ''पिशाची'' इति आक्रन्दनं कुर्वन्तः पलायितवन्तः । अत्र मम कः वा दोषः ?'' इति पृष्टवती ।

सुशीला यावत् किमपि वक्तुम् उद्युक्ता तावता द्वारताडनशब्दः श्रुतः । शारदा वातायनम् अतिक्रम्य ततः अदृश्या जाता ।

अथ कदाचित् रङ्गनाथः सन्तोषेण गृहम् आगत्य - ''एकं भाटकगृहं लब्धम् अस्ति । श्वः प्रातःकाले एव इतः प्रस्थानं

करिष्यामः'' इति सुशीलाम् उक्तवान् । रङ्गनाथस्य वचनं श्रुतवतः जयदेवस्य निराशा अभवत् । तथापि 'पिशाचगृहम् इति प्रसिद्धे अस्मिन् इतोऽपि अधिककालं वासं कुर्वन्तु इति अहं कथं वदेयम् ?' इति चिन्तयन् सः मौनं स्थितवान् ।

रङ्गनाथः स्नानं कर्तुं कूपस्य समीपं गतवान् । तस्मिन् एव क्षणे वृक्षात् अवतीर्य शारदा रङ्गनाथस्य पुरतः प्रत्यक्षा जाता । तां दृष्ट्वा रङ्गनाथः कम्पमानः सन् भूमौ भयेन उपविष्टवान् ।

पिशाची अपि तस्य पुरतः उपविश्य - ''हे भ्रातः ! भवतः भयं मास्तु । मया उक्तं किञ्चित् शृणोतु'' इत्युक्त्वा स्वस्य समग्रकथां निवेद्य पुनः उक्तवती - ''श्वः अन्यत् गृहं गच्छाम इति भवतः वाक्यम् अहं श्रुतवती । परन्तु भवतोः सहवासेन मम पुत्रः सन्तोषेण आसीत् । भवतः पुत्रीं तस्मै दत्त्वा विवाहं कृत्वा मम सन्तोषं शाश्वतीकरोतु । तयोः विवाहं दृष्ट्वा अहम् इतः निर्गमिष्यामि'' इति उक्तवती ।

तदा दयामयहृदयः रङ्गनाथः - ''भवत्याः उपकारं कदापि न विस्मरामि । भवत्याः वाक्यम् अतिक्रम्य गन्तुम् अहं सर्वथा न शक्नोमि'' इति उक्तवान् ।

रङ्गनाथस्य वाक्यं श्रुत्वा पिशाची - ''विवाहभोजनं कृतवती इव सन्तुष्टा अस्मि'' इत्युक्त्वा वायुना सह गतवती ।

स्नानम् अपि विस्मृत्य रङ्गनाथः गृहस्य अन्तः आगत्य निराशया उपविष्टवन्तं जयदेवं दृष्ट्वा - ''वत्स ! अस्माकं गमनं भवतः इष्टाय न अभवत् इति भवतः दर्शनात् एव अहं ज्ञातुं शक्नोमि । मम पुत्रीं भवते दत्त्वा विवाहं निर्वर्त्य अहं मम मार्गम् अन्विष्य गमिष्यामि'' इति हसन् उक्तवान् ।

तत् श्रुत्वा जयदेवः रङ्गनाथस्य हस्तौ प्रीत्या दृढतया गृहीत्वा - ''अहो ! परमसौभाग्यं मम । यदि सुशीला मम पत्नी भविष्यति तर्हि एतत् गृहं तस्याः एव खलु भविष्यति ? पुत्र्याः गृहं त्यक्त्वा भवान् एकः एव कुत्र गच्छेत् ? त्रयः अपि मिलित्वा वासं करवाम'' इति सन्तोषेण उक्तवान् ।

तत्रैव स्थित्वा तयोः सम्भाषणं श्रुतवती सुशीला लज्जया शिरः अवनमय्य पार्श्वप्रकोष्ठं प्रविष्टवती ।





# मातृप्रीतिः

कस्मिंश्चित् ग्रामे यशोदा नाम काचित् महिला आसीत् । तस्याः राजेशः नाम पुत्रः आसीत् । यशोदा महता कष्टेन सम्पादितेन धनेन पुत्रं प्रीत्या पालितवती आसीत् । राजेशः मित्रैः सह क्रीडन् समयं यापयति स्म ।

परन्तु राजेशः कञ्चित् अंशम् अवलोकितवान् आसीत् यत् - मम स्नेहिताः सर्वे पित्रोः साहाय्यं कुर्वन्तः सन्ति इति । 'मित्रैः इव मया अपि करणीयम्' इति सः चिन्तयति स्म । परन्तु तस्य माता स्वपुत्रस्य कष्टम् अनिच्छन्ती पुत्रद्वारा अल्पम् अपि कार्यं न कारयति स्म । अतः राजेशः निश्चितवान् यत् अन्यं ग्रामं गत्वा वा मया कार्यं करणीयम् इति । एकस्मिन् दिने सः मातरम् अपि अनुक्त्वा गृहतः प्रस्थितवान् एव ।

प्रयाणं कुर्वन् राजेशः कञ्चित् ग्रामं प्राप्तवान् । तत्र कस्यचित् धनिकस्य गृहे उद्योगं प्राप्य कार्यं कर्तुम् उद्युक्तः अभवत् च । एवम् एव वर्षं यावत् कार्यकरणानन्तरं राजेशेन माता स्मृता । अतः सः - 'मातरं द्रष्टुम् इच्छामि' इति धनिकम् उक्तवान् ।

तदा धनिकः तस्मै एकं रजतस्य फलकं दत्त्वा - ''एतत् जागरूकतया गृहं नयतु'' इति उक्तवान् ।

यदा राजेशः धनिकस्य गृहे कार्यं कुर्वन् आसीत् तदा तत्र विवाहद्वयं प्रवृत्तम् आसीत् । तदा धनिकः कर्मकरेभ्यः सर्वेभ्यः इच्छानुसारम् उपायनं दत्तवान् आसीत् । तत्काले राजेशः उपायनं न स्वीकृतवान् आसीत् । कृतस्य कार्यस्य निमित्तं वेतनम् अपि न स्वीकृतवान् आसीत् सः । अतः धनिकः तस्मै अधिकं रजतं दत्तवान् आसीत् । राजेशः रजतं राङ्कवेण बद्ध्वा, तत् स्कन्धे स्थापयित्वा उत्साहेन

'पंञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

ततः प्रस्थितवान् ।

अग्रे गमनसमये राजेशस्य मनसि भावः उत्पन्नः यत् स्कन्धे स्थितस्य रजतस्य भारः अधिकः अस्ति इति । किञ्चित् अग्रे गमनानन्तरं कश्चित् पुरुषः अश्वम् आरुह्य पुरतः आगतवान् । तं दृष्ट्वा राजेशः चिन्तितवान् - 'यदि मम समीपे तादृशः अश्वः स्यात् तर्हि अहम् अपि वेगेन गत्वा अचिरात् एव मातरं द्रष्टुं शक्नुयाम्' इति । अतः सः अश्वचालकं पृष्टवान् - "स्वामिन् ! एतस्य अश्वस्य मूल्यं कियत् ?" इति ।

"अश्वं क्रेतुम् इच्छतः भवतः समीपे किं वा अस्ति ?" इति राजेशं पृष्टवान् अश्वचालकः ।



तदा राजेशः स्वसमीपे स्थितं रजतम् अश्वचालकाय दर्शितवान् । सः अश्वचालकः रजतं दृष्ट्वा अश्वस्य दानम् अङ्गीकृतवान् । राजेशः रजतं तस्मै दत्त्वा अश्वं स्वीकृतवान् । अनन्तरम् अश्वम् आरुह्य उपविष्टवान् च । अनुक्षणम् एव अश्वः वेगेन धावनम् आरब्धवान् । तस्य वेगस्य नियन्त्रणं कर्तुम्, अपेक्षितदिशि अश्वं चालयितुं वा राजेशः न शक्तवान् ।

मार्गे कश्चन गोपालकः राजेशस्य परिस्थितिं दृष्ट्वा अश्वस्य पुरतः आगत्य स्थितवान् । महता कष्टेन अश्वं स्थगितवान् च । तावता क्रुद्धः अश्वः शरीरं कम्पयन् राजेशं पातितवान् ।

गोपालकः तम् उत्थाप्य - "भवान् तु वामनः अस्ति । भवान् किमर्थम् अश्वचालनं करोति ? एतम् अश्वं कुतश्चित् चोरितवान् वा भवान् ?" इति पृष्टवान् ।

राजेशः प्रवृत्तं सर्वं तम् उक्तवान् । "भवता दोषः कृतः अस्ति । एतम् अश्वं दृष्ट्वा भवतः मातुः सन्तोषः न भवेत् । अश्वं विना भवान् धेनुं यदि नयेत् तर्हि भवतः माता क्षीरेण दधि कुर्यात् । इदानीम् अपि कालः न अतीतः । भवान् अश्वं मह्यं दत्त्वा धेनुं नयतु" इति उक्तवान् गोपालकः ।

राजेशः तस्य वचनम् अङ्गीकृत्य अश्वं गोपालकाय दत्त्वा धेनुं स्वीकृत्य ततः प्रस्थितवान् । परन्तु गोपालकः राजेशाय कृशां, वृद्धां धेनुं दत्तवान् आसीत् । मध्याह्नसमये राजेशस्य महती बुभुक्षा अभवत् । 'सायङ्कालः यदा भविष्यति तदा धेनुः क्षीरं दास्यति इति भाति । तत् पीत्वा बुभुक्षां निवारयिष्यामि' इति राजेशः

चिन्तितवान् ।

सूर्यास्तसमये राजेशः अजानां समूहस्य समीपं गतवान् । सः अजपालकं पृष्ट्वा एकं कलशं स्वीकृत्य दोहनम् आरब्धवान् । तदा धेनुः पादेन तं प्राहरत् ।

एतत् सर्वं दृष्ट्वा अजपालकः हसन् - ''एषा वृद्धा धेनुः अस्ति । एषा भवते क्षीरं न ददाति । भवान् कुतः एताम् आनीतवान् ?'' इति पृष्टवान् ।

तदा राजेशः प्रवृत्तं सर्वम् अजपालकम् उक्तवान् । सर्वं श्रुत्वा अजपालकः - ''कोऽपि भवन्तं वञ्चितवान् । भवान् एतां धेनुम् अत्रैव त्यजतु । अहं भवते एकाम् अजां ददामि । सा तु भवते उत्तमं क्षीरम् अपि ददाति । अग्रे एतस्याः कारणतः भवतः गृहे अजसमूहः एव भविष्यति'' इति उक्त्वा एकाम् अजां राजेशाय दत्तवान् । अनन्तरं तस्याः एव अजायाः क्षीरं पातुं दत्तवान् च । तस्मात् सन्तुष्टः राजेशः अजां स्वीकृत्य ततः प्रस्थितवान् । किञ्चिद्दूरं यदा गतं तदा सा अजा राजेशेन सह गमनं निराकुर्वती पृष्ठतः एव गन्तुं प्रयतमाना उच्चैः आक्रोशनम् आरब्धवती । ताम् अग्रे नेतुं राजेशस्य शक्तिः न आसीत् ।

तावति काले कश्चित् जनः हस्तेन कुक्कुटं गृहीत्वा तेन मार्गेण आगतवान् । राजेशं पृष्टवान् च - ''भोः ! भवान् किमर्थम् एतावत् कष्टम् अनुभवन् अस्ति ? एषा अजा भवदीया न वा ?'' इति ।

पुनः राजेशः स्वकथां तं जनम् निवेदितवान् । सः जनः सर्वं श्रुत्वा - ''भवतः ग्रामः इतोऽपि दूरे अस्ति । एताम् अजां तावद्दूरं भवान् नेतुं न शक्नोति । अतः भवान् एताम् अजां मह्यं दत्त्वा एतं कुक्कुटं नयतु । एषः कुक्कुटः प्रतिदिनं दश अण्डानि ददाति । केषुचित् एव दिनेषु



भवतः गृहं कुक्कुटैः पूर्णं भविष्यति । तदा भवतः मातुः अपि अतीव सन्तोषः भविष्यति'' इति ।

तस्य अभिप्रायम् अङ्गीकृत्य राजेशः - 'एतस्याः अजायाः पीडा मास्तु' इति चिन्तयन् तस्मै अजां दत्तवान् । कुक्कुटेन सह ततः प्रस्थितवान् च । कुक्कुटः अण्डं न ददाति इत्यपि ज्ञानं न आसीत् राजेशस्य ।

एवम् एव अग्रे गमनानन्तरं कञ्चित् ग्रामं प्राप्तवान् राजेशः । तत्र कश्चित् अनेकान् खड्गान् निकषस्य उपरि आघर्षयन् निशितान् करोति स्म ।

राजेशः तत्रैव स्थित्वा तेन क्रियमाणं कार्यं पश्यन् - ''भवान् किं करोति ?'' इति पृष्टवान् ।

''खड्गान् निशितान् कुर्वन् अस्मि अहम् । एतस्मात् धनं सम्पादयितुं शक्यते । एतत् अपि किञ्चित् विशिष्टं कार्यम्'' इति राजेशम् उक्तवान् सः जनः ।

''मम समीपे अपि एतादृशी शिला अस्ति चेत् उत्तमं भवेत्'' इति उक्तवान् राजेशः ।

तदा सः जनः उक्तवान् - ''मम समीपे अन्या शिला अस्ति । यदि भवान् इच्छति तर्हि तां भवते दास्यामि'' इति ।

''मम समीपे कुक्कुटात् ऋते अन्यत् किमपि नास्ति'' इति उक्तवान् राजेशः ।

तत् श्रुत्वा सः जनः - ''चिन्तां मा करोतु । भवान् कुक्कुटम् एव ददातु । अहं निकषोपलं ददामि'' इति उक्त्वा निकषं राजेशाय दत्तवान् ।

अनन्तरं राजेशः तं निकषं स्वीकृत्य ग्रामं प्राप्तवान् । सः मातरम् उक्तवान् - ''धनिकेन दत्तं रजतं दत्त्वा एतादृशीं विशिष्टां शिलां प्राप्तवान् अहम्'' इति ।

तस्य तत् वचनं श्रुत्वा माता - ''अहो, कीदृशः मूर्खः अस्ति भवान् ! उपयोगरहिताम् एतां शिलाम् आनीतवान् खलु भवान् ! भवतु नाम । रजतं नष्टं चेदपि चिन्ता नास्ति । भवान् सुरक्षितम् आगतवान् खलु । तेनैव मम अतीव सन्तोषः'' इति राजेशम् उक्तवती ।

अनन्तरं राजेशः मातुः मार्गदर्शनस्य अनुगुणम् उत्तमरीत्या कार्यं कुर्वन् धनं सम्पादितवान् । तेन धनेन मातरम् अपि सुखेन पालितवान् सः ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां फेब्रवरी - १९९७ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



K. SUBBA RAO

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **नेत्रे उद्घाट्य एव करणीयम् एतत् ।**

द्वितीयचित्रम् - **नेत्रे निमील्य अपि क्रियते खलु एतत् ।**

प्रेषिका - जि.एस्. गीता, श्रीनिधिनिलयः, ५१४८, बझार्मार्गः, अरसीकेरे - ५७३ १०३

---




Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.